# श्रावकप्रज्ञप्तिः

श्रीहरिभद्रसूरिविरचितटीकासहिता।

प्रेमचन्द्रतनुजेन केशवलालेन

संशोधिता।

सा च

मुम्बयीस्थज्ञानप्रसारकमण्डलनामसमाजेन

प्राकाश्यं नीता।

मुम्बय्याम्

निर्णयसागरयन्त्रालये मुद्रिता।

संवत् १९६१.

मूल्यं रु. ०-१०-०

# आमुखम् ।

श्रावकप्रज्ञप्तिनामधेयो ऽयमेकाधिकचतुःशत(४०१)गाथात्मको ग्रन्थः पुरा मागध्यां प्रणीतो ऽस्ति । एनं च सुगृहीतनामधेयः श्रीहरिभद्रसूरिष्टीकया समलंचकार । ग्रन्थस्यास्य प्रणेता कदा को वा समभूदित्येतन्न शक्यते सम्यङ् निर्णेतुम् । भगवतोः सूरिवाचकपर्याययोः श्रीहरिभद्रोमास्वात्योरन्यतरः को वास्य रचयितेत्येतदपि संदेहदोलारूढमेव ।

भगवता श्रीहरिभद्रसूरिणायं स्वोपज्ञटीकागटीको निरमायीत्यपि वक्ष्यमाणप्रमाणैरवगम्यते । तथाहि—

१ चतुःसप्तत्यधिकसप्तदशशत(१७७४)प्रमिते विक्रमाब्दे श्रीमता लावण्यविजयेन स्वोपज्ञटीकासनाथो द्रव्यसप्ततिर्नाम ग्रन्थो व्यरच्यत । तत्र च पञ्चाशत्तमगाथायाष्टीकायाम् "यदाहुः श्रावकप्रज्ञप्तौ श्रीहरिभद्रसूरिपादाः" एवमलिख्यत । तदनन्तरमेव टीकायां प्रस्तुतग्रन्थस्यैव चतुर्दशोत्तरशत (११४) प्रमिता गाथा प्रमाणत्वेनावतारिता । ततः स ग्रन्थरचयितामुं भगवान्हरिभद्रसूरिरेव रचयामासेति प्रतुन इति भाति।

२ नवाङ्गीवृत्तिकृद्भगवान् सूरिरभयदेवः श्रीहरिभद्रसूरिसंदृब्धं पञ्चाशकं व्यवृणोत् । तत्र च स पूर्वैरेवोक्तमित्यभिधाय "संपत्तदंसणाई" इत्येतामेव गाथामवातारयत् । तेन च मूलात्मकोऽप्ययं ग्रन्थो भगवता श्रीहरिभद्रसूरिणैव व्यरच्यतेति निश्चीयते।

३ श्रीमानविजयप्रणीते श्रीयशोविजयसंशोधिते धर्मसंग्रहाभिधानप्रकरणे द्वादशव्रतप्रसङ्गेनेदमभ्यधायि । तद्यथा—सम्य-

स्वातिविरचितश्रावकप्रज्ञप्तौ तु अतिथिशब्देन साध्वादयश्चत्वारो गृहीताः । ततस्तेषां संविभागः कार्य इत्युक्तम् । तथा च तत्पाठः । "अतिथिसंविभागो नाम अतिथयः साधवः साध्व्यः श्रावकाः श्राविकाश्चैतेषु गृहमुपागतेषु भक्त्याभ्युत्थानासनदानपादप्रमार्जननमस्कारादिभिरर्चयित्वा यथाविभवशक्ति अन्नपानवस्त्रौषधालयादिप्रदानेन संविभागः कार्यः" इति । श्रीमुनिचन्द्रसूरिविरचितधर्मबिन्दुटीकायां द्वादशतमव्रतप्रस्तावे श्रीवादिदेवसूरिरप्येवमेवाह । अनेन च संस्कृतेऽपि श्रावकप्रज्ञप्तिर्नामातिविस्तृतो ग्रन्थः श्रीमदुमास्वातिविरचितोऽभूदित्यवगम्यते । अयं पुनः प्रस्तुतो ग्रन्थो मागध्यां मूलात्मको विद्यते । ततो निर्णीयते नायं भगवदुमास्वातिप्रणीतो भवेदिति ।

१ श्रीमदुमास्वातिविरचिता श्रावकप्रज्ञप्तिरस्तीत्येतद्विचारामृतसंग्रहादिग्रन्थैरपि निश्चीयते ।

२ पञ्चाशकटीकायां श्रीमता नवाङ्गीवृत्तिकृताभयदेवसूरिणेदमभ्यधायि । तद्यथा—वाचकतिलकेन श्रीमतोमास्वातिवाचकेन श्रावकप्रज्ञप्तौ सम्यक्त्वादिः श्रावकधर्मो विस्तरेणाभिहित इति । ततश्चेदमेवात्र जिज्ञास्यं यदेनमुमास्वाती रचयामास वा न वेति।

३ ग्रन्थस्यास्य मूलगाथान्ते प्रायः सर्वत्र 'उमास्वातिविरचिता सावयपन्नत्ती संमत्ता' इति लिखितं दरीदृश्यते । एतदपि चास्योमास्वातिवाचकः प्रणेतेति मनने मानम् ।

भगवता श्रीहरिभद्रसूरिणास्योपरि टीका व्यरच्येतति ग्रन्थान्तलेखपर्यालोचनया स्पष्टं प्रतीयते ।

इदं च प्रस्तुतसूरिविरचितस्य स्वोपज्ञटीकासंवलितस्य शास्त्रवार्त्तासमुच्चयस्यामुखपर्यालोचनया तथा जिनभद्रसूरेरन्तेवासितां स्वयमेवायमुररीचकारेत्यादिकारणैश्चावसीयते । प्रान्ते विरहाङ्काभावान्नायं विरचितो भगवता हरिभद्रसूरिणेति नाशङ्कनीयम् । यतो योगबिन्दुप्रमुखा विरहाङ्कविनाकृता अप्यनेके तद्रतिचा ग्रन्थाः समवलोक्यन्ते । चतुश्चत्वारिंशदधिकचतुर्दशशत(१४४४) ग्रन्थानां निर्मातेति भुवनप्रतीतोऽयं सूरिः पञ्चत्रिंशदधिकपञ्चशते ( ५३५ ) विक्रमेऽब्दे देवलोकं स्वप्रत्यासत्त्या मण्डयामास ।

उमास्वात्यपेक्षयास्याधिकाः सन्ति प्रचलिता ग्रन्था इति तच्चरिते तत एवावगन्तव्यम् ।

श्रीमानुमास्वातिरपि पञ्चशतं ग्रन्थान्व्यरचयदित्यैतिह्यमात्रम् ।

बृहद्गच्छीयेन श्रीहरिभद्रसूरिणापि विक्रमीयपञ्चाशीत्यधिकैकादशशत(११८५)प्रमिताब्दविरचितायां प्रशमरतिटीकायामेवमेवोक्तम् ।

तत्त्वार्थाधिगमः प्रशमरतिर्जम्बूद्वीपसमासश्चेति ग्रन्थत्रयं श्रीमदुमास्वातिवाचकप्रणीतमुपलभ्यते । पूजाप्रकरणं नामैको ग्रन्थ एकोनविंशतिश्लोकात्मक एतद्विरचितो भवेदिति कथनमात्रम् । एतद्विरचितान्यन्या श्रावकप्रज्ञप्तिर्भवेदित्येवद्धर्मसङ्ग्रहादिग्रन्थैरपि निश्चीयते । एतद्विरचितजम्बूद्वीपसमासान्तलेखादवगम्यते । तद्यथा–इतिरियं सिताम्बराचार्यस्य महाकवेरुमास्वातिवाचकस्येति ।

अयं सूरिः प्रागतिप्राचीनसमये समुदियायेत्येतदनन्तरोक्तप्रमाणेभ्यः प्रमीयते। नात्रेषदपि संदेहद्रावदर्घं किमपि।

विषये प्रस्तुते डॉक्टरपिटर्सनेन प्रकाशिते तार्तीयीके रिपोर्टाभिधेये प्रसिद्धिपुस्तके षट्त्रिंशत्तमे पृष्ठे—श्यामाचार्यो नाम वाचकवर्यान्तेवासी श्रीवीरनिर्वाणात्षट्सप्तत्यधिकशतत्रय(३७६)प्रमिते हायनेऽन्हेहोधर्ममभ्याजगामेत्यलिख्यत। बलिसहस्यान्तेवासी स्वातिर्गुरुः श्यामाचार्यस्य इति पट्टावल्यामवलोक्यते। परं स स्वातिरयमुमास्वातिश्चेति द्वावप्येकनरनामनी इत्येतदपि संदेहकलितम्।

तत्त्वार्थभाष्ये दशमेऽध्याये समाप्तिसमय उमास्वातिर्वाचक उच्चनागरीशाखीय इति स्वयमेवालिलिखे। उच्चनागरीशाखा श्रीमहावीरस्वामिद्वादशपट्टनिवासिनः श्रीमदार्यशान्तिश्रेणिकादाविर्बभूवेति कल्पसूत्रान्तर्गतस्थविरावल्याम्।

श्रीमहावीराष्टमपट्टोदयोदितस्य भगवतः श्रीमदार्यमहागिरेरन्तेवासी बलिसहाचार्यो ऽभवत्।

तत्त्वार्थाधिगमीयदशमाध्यायावसाने स्वयं लिखितात्स्वचरिताद्यदवगम्यते तद्यथा—शिवश्रीप्रशिष्यः श्रीमद्घोषनन्दिश्रमणशिष्यः वाचनान्वयेन तु मुण्डपादप्रशिष्यः मूलवाच्यवाचकाचार्यशिष्यः श्रीमदुमास्वातिरभूदिति। जन्म च तदीयं न्यग्रोधिकासंनिवेशे समभवत्। विहारागतकुसुमपुरे ऽयं व्यरच्यत। स्वजनुपायं कौभीषणगोत्रमभूषयत्। आसीत्स्वातिर्नामैतज्जनिकर्ता। गुरुजननिरतास्य जननी पुत्रवत्सला वत्सगोत्रभवा।

ग्रन्थेऽस्मिन्ग्रथिता ये विषया विद्यन्ते ते विद्वज्जनैर्विदित्वा वि-

चार्याः सततमाचर्याश्च ततोऽविरतं विभवविराजितैर्विभागविरतैर्यावज्जीवं स्वान्ते स्मर्तव्याः ।

ग्रन्थेऽस्मिन्प्राङ्मङ्गलाभिधेयाभिधानानन्तरं श्रावकशब्दो व्याख्यायत । तद्यथा–यः सम्यक्त्वादिधरो यश्च प्रतिदिनं साधुसमीपे समागत्य स्वकीयां सामाचारीमाकर्णनात्कर्णयोः पावयित्रीमाकर्णयति स श्रावक इति श्रवणविषयेणाभिधीयते । यतः श्रावकलक्षणे सम्यक्त्वं श्रावकाणुव्रतानि चायान्त्यततस्तत्स्वरूपमत्र यथाक्रममभिधाय सामाचारी कथिता । सम्यक्त्वस्वरूपकथनावसरे प्रसङ्गेन कर्माष्टकस्वरूपं तत्त्वविवरणं सम्यक्त्वातिचाराश्चाकथ्यन्त । अनन्तरं सम्यक्त्वोदयान्मानसी परिणतिः कायव्यापृतिश्च कीदृक्स्वरूपमवलम्बत इत्येतदभिदधे ।

द्वादशाणुव्रतसमर्थनावसरे च प्रथमस्य प्राणापातविरतिसमाख्यस्य तथा नवमस्य सामायिकनामधेयस्याणुव्रतस्यातीवप्रशस्यता प्रतिपादिता समुपलभ्यते । प्राणातिपातविरतिप्रतिपत्तिप्रतिपादनावसरे च प्रत्याख्यातिनिराकृतिवादिनां परकीयप्राणहृत्प्राणभृत्प्राणव्यपरोपणं न दुष्कृतिकृतिबन्धकं प्रत्युत श्रेयोनिबन्धनमिति विवदमानानां, एकान्ततो नित्योऽनित्यो वा जीव इति प्रतिपन्नानाम्, मोचकवाचकवाच्यानामज्ञानिनां मतानि तत्तद्युक्तिसमालम्बनेन समर्थ्य तत्खण्डनं सुखावबोधमकारि। अवसाने चाविरतिरेव कर्मबन्धहेतुत्वात्कर्मेत्युक्तम् । नवमे च सामायिकाख्याणुव्रते देशविरतानां त्रिविधत्रिविधप्रत्याख्यानाभावः कथमस्तीति सम्यक्प्रतिपादितम् । सामायिकं शश्वद्विधेयमिति प्रतिपाद्य

जिनपूजा हिंसाप्रचुरेति वादिनो मूका विदधिरे । तदनन्तं गामान्तरगच्छतः श्रावकस्य सामाचारी वर्णिता । तद्यथा तत्रस्थ श्रावकादिसाधर्मिकमिलनम् । दर्शनाय जिनसदनेषु गमनम् इत्यादयोऽपूर्वा विषयाः प्राचीनपद्धतिं परितोऽवलम्ब्य प्रतिपादिताः । अन्ते च संलेखनां लेखनुतामखिलविरतिविधेयां विधिविषयत्वेन प्रतिपाद्य मुक्तिरेव धर्मप्राप्तेः प्रधानं फलमप्रधानं स्वर्गमनप्रभृतीति प्रत्यपादि । अन्ते च शोभानाः स्वकीया अध्यवसाया भव्यजनहिताय प्रादुश्चक्रिरे । ततः प्रमासमेतान्प्रति प्रमादान् क्षमयित्वा ग्रन्थः पर्यसमाप्यत ।

सांप्रतमस्याङ्कनविषये किंचिन्मात्रमुच्यते ।

मूलात्मकस्यास्य त्रीणि पुस्तकानि चत्वारि च टीकायाः समलभेऽहम् । तत्र त्रीणि मूलसमलंकृतानि त्रिपाठपत्रात्मकानि । चतुर्थं तु मूलसमुज्झितं केवलं टीकात्मकमेव । एषां विभागद्वयं विधीयेत । तदित्थम् ।

१ (क) देवशापाटकान्तर्वर्त्तिपं० दयाविमलहस्तगतभाण्डागारान्तर्गतमेकं मूलात्मकं पुस्तकम् ।

(ख) पं० आनन्दसागराणां मूलात्मकं पुस्तकम् । एतत्पुस्तकद्वयमेकस्याः प्रतेः प्रतिबिम्बमेव ।

२ पं० गुलाबविजयानां मूलपुस्तकम् । इदं च पूर्वस्मात्पुस्तकाद्भिन्नमेव भाति ।

३ पं० गुलाबविजयानां टीकापुस्तकं मूलं विनाकृतम् ।

४ (क) पं० दयाविमलानाम् ।

( ख ) पं० कान्तिविजयानाम् ।

( ग ) पं० वीरविजयानाम् ।

सटीकं पुस्तकत्रयमेतत्साक्षात्परंपरया चैकपुस्तकलिखितमिति भाति । अत एतत्पुस्तकत्रयमप्येकपुस्तककल्पम् ।

प्रस्तुतपुस्तकं प्रायेण ( १ ) एतत्पुस्तकपाठं प्रमाणीकृत्य संशोधितम् ।

अनेन स्पष्टमवगम्यते यदहं पुस्तकद्वयं मूलस्य तथा पुस्तकद्वयमेव टीकायाः प्राप्तवम् । सकलान्यप्येतानि सन्ति पुस्तकान्यतीवाशुद्धानि । ततोऽस्येपदङ्कनानन्तरमर्धाङ्कितमेवेदमास्तामिति विचारितम् । तथापि यथादर्शं पुस्तकमङ्कनीयमिति प्रयोजकाभिप्रायमनुसृत्यतदङ्कितम् । शुद्धपुस्तकालाभात्कुत्रचिद्य मदीयाज्ञानात् बहून्यशुद्धस्थलानि संदृश्येरन् । तानि शुद्धीकृत्य विबुधैर्योचनीयानि पत्रप्रेषणद्वारा मां प्रति विज्ञपनीयानि च । येन द्विःकृत्वोऽङ्कनावसरे शुद्धीकृत्याङ्कयिष्यामः ।

अस्याङ्कनेऽकारि साहायकं जैनपत्रिकाधिपतिना शा०फतेचंदारमजेन भगूभाइना । अतस्तदुपकृतिं स्मरामः । अस्याङ्कयित्री ज्ञानप्रसारकसभा वर्त्ततेऽतः सार्द्दत्यतीव धन्यवादम् । एतस्यां समग्रग्रन्थशोधनादौ पं० आनन्दसागरैरतीव धर्मधुरीकृत्यास्मिन्कार्ये सहायताकारि । अतोऽङ्कितस्यास्य ग्रन्थस्योदये मूलाधारभूतास्त एवेति मन्ये । अतः सविनयं स्मरामि तेषामुपकृतिमात्रमत्र केवलम् । यतस्तान्प्रति प्रत्युपकर्तुं न पार्यते । प्रोफेसरपदवीधारि जेकोबीनापि शोधनीयपत्रणा-( प्रुफस् )-शो-

धनसूचनाप्रदानादिनोपकृताः । अतस्तदपि कृतज्ञतया स्मृतिपथमुपनीयते ऽङ्कनावसरे । यैस्तावत्स्वकीयानि पुस्तकानि प्रदत्तानि तेऽप्युपकर्तार एव । पुरुषधर्मत्वाद्भ्रान्तेस्तथाज्ञानदोषाच्च यदत्र स्खलितं तत्सुधीभिः क्षन्तव्यमिति पुनः प्रार्थ्य श्रीसंघसमक्षं तत्प्रायोगिकमिच्छामि दुक्कडं दीयते ।

संशोध्याङ्कयिता
प्रेमचंदतनयः
केशवलालः
बी. ए. एल. एल. बी.

अहमदाबाद-
नगरम्

दावदावदवथुद्द्यथाग्रह्न्दवारियम्
मोददायि तद्वदेव धर्मवस्तु कर्तरि
दम्यभव्यदेशविरतसर्वविरतदुष्कृति-
रमणहन्तृ मोक्षचटिकडौकतारक ॥ १ ॥

अथ

# उमास्वातिवाचककृतश्रावकप्रज्ञप्त्याख्यप्रकरणं

हरिभद्रसूरिविरचितव्याख्यासमेतम् ॥

---

स्मरणं यस्य सत्त्वानां तीव्रपापौघशान्तये ।
उत्कृष्टगुणरूपाय तस्मै श्रीशान्तये नमः ॥ १ ॥

स्वपरोपकाराय श्रावकप्रज्ञप्त्याख्यप्रकरणस्य व्याख्या प्रस्तूयते । तत्र चादावेवाचार्यः शिष्टसमयप्रतिपालनाय विघ्नविनायकोपशान्तये प्रयोजनादिप्रतिपादनार्थं चेदं गाथासूत्रमुपन्यस्तवान्॥

अरहंते वंदित्ता सावगधम्मं दुवालसविहं पि।
वोच्छामि समासेणं गुरूवएसाणुसारेणं ॥ १ ॥

अर्हतो वन्दित्वा श्रावकधर्मं द्वादशविधमपि ।
वक्ष्ये समासेन गुरूपदेशानुसारेण ॥ १ ॥

इह हि शिष्टानामयं समयो यदुत शिष्टाः क्वचिदिष्टे वस्तुनि प्रवर्तमानाः सन्त इष्टदेवतानमस्कारपूर्वकं प्रवर्तन्त इत्ययमप्याचार्यो न हि न शिष्ट इत्यतस्तत्समयप्रतिपालनाय, तथा श्रेयांसि बहुविघ्नानि भवन्तीति ( उक्तं च

श्रेयांसि बहुविघ्नानि भवन्ति महतामपि ।
अश्रेयसि प्रवृत्तानां क्वापि यान्ति विनायकाः ॥ )

इदं च प्रकरणं सम्यग्ज्ञानहेतुत्वाच्छ्रेयोभूतं वर्तते अतो मा-भूद्विघ्न इति विघ्नविनायकोपशान्तये, तथा प्रेक्षापूर्वकारिणः प्रयोजनादिविरहेण न क्वचित्प्रवर्तन्त इत्यतः प्रयोजनादिप्रतिपादनार्थं च, तत्र अरहन्ते वंदित्ता इत्यनेनेष्टदेवतानमस्कारमाह अयमेव विघ्नविनायकोपशमहेतुः सावगधम्ममित्यादिना तु प्रयोजनादि त्रयं इति गाथासमुदायार्थः ॥

अवयवार्थस्तु अशोकाद्यष्टमहाप्रातिहार्यादिरूपां पूजामर्हन्तीत्यर्हन्तस्तीर्थकरास्तानर्हतः। वंदित्वा अभिवन्द्य । श्रावका वक्ष्यमाण-शब्दार्थाः तेषां धर्मस्तं किंभूतं द्वादश विधाः प्रकारा अस्येति द्वादशविधस्तं द्वादशविधमपि संपूर्णं नाणुव्रताद्येकदेशप्रतिवद्धमिति। वक्ष्येऽभिधास्ये ततश्च यथोदितश्रावकधर्माभिधानमेव प्रयोजनं, स एवाभिधीयमानो ऽभिधेयं, साध्यसाधनलक्षणश्च संवन्धः तत्र साध्यः प्रकरणार्थः साधनमिदमेव वचनरूपापन्नमिति ॥ आह यद्येवं नार्थोऽनेन पूर्वाचार्यैरेव यथोदितश्रावकधर्मस्य ग्रन्थान्तरेष्वभिहितत्वात्, उच्यते, सत्यमभिहितः प्रपञ्चेन, इह तु संक्षेपरुचिसत्त्वानुग्रहार्थं समासेण संक्षेपेन वक्ष्ये । किं स्वमनीषिकया, नेत्याह, गुरूपदेशानुसारेण गृणाति शास्त्रार्थमिति गुरुस्तस्मादुपदेशो गुरूपदेशस्तदनुसारेण तन्नीत्येत्यर्थः ॥

श्रावकधर्मस्य प्रकान्तत्वात्तस्य श्रावकानुगतत्वाच्छ्रावकशब्दार्थमेव प्रतिपादयति ॥

१ श्रावकानुगतत्वात् ।

संपत्तदंसणाई पइदियहं जइजणा सुणेई य ।
सामायारिं परमं जो खलु तं सावगं बिन्ति ॥ २ ॥

संप्राप्तदर्शनादिः प्रतिदिवसं यतिजनाच्छृणोति च ।
सामाचारीं परमां यः खलु तं श्रावकं ब्रुवते ॥ २॥

संप्राप्तं दर्शनादि येनासौ संप्राप्तदर्शनादिः। दर्शनग्रहणात्सम्य
ग्दृष्टिरादिशब्दादणुव्रतादिपरिग्रहः। अनेन मिथ्यादृष्टेर्व्युदासः। इ
इत्थंभूतः प्रतिदिवसं प्रत्यहं यतिजनात्साधुलोकात् शृणोति च [illegible]
सामाचारीं परमां। तत्र समाचरणं समाचारः शिष्टाचरितः क्रिया
कलापः तस्य भावो गुणवचनब्राह्मणादिभ्यः कर्मणि च ष्यञ् सामा
चार्यं पुनः स्त्रीविवक्षायां षिद्गौरादिभ्यश्चेति ङीष् ( टाप् ) यस्ये
त्यकारलोपः यस्य हल इत्यनेन तद्धितयकारलोपः परगमनं सामा
चारी तां सामाचारीं परमां प्रधानां साधुश्रावकसंबद्धामित्यर्थः
यः खलु य एव शृणोति तं श्रावकं ब्रुवते तं श्रावकं प्रतिपाद
यन्ति भगवन्तस्तीर्थकरगणधराः ॥

ततश्चायं पिण्डार्थः। अभ्युपेतसम्यक्त्वः प्रतिपन्नाणुव्रतोऽपि प्रति
दिवसं यतिभ्यः सकाशात्साधूनामगारिणां च सामाचारीं शृणो
तीति श्रावकः इति।

सांप्रतं श्रवणगुणान् प्रतिपादयति ।

नवनवसंवेगो खलु नाणावरणखओवसमभावो ।
तत्ताहिगमो य तहा जिणवयणायन्नणस्स गुणा ॥३॥

नवनवसंवेगः खलु ज्ञानावरणक्षयोपशमभावः।
तत्त्वाधिगमश्च तथा जिनवचनाकर्णनस्य गुणाः ॥३॥

नवनवसंवेगः प्रत्यग्रः प्रत्यग्रः संवेगः आर्द्रांतःकरणता मोक्षसुखाभिलाप इत्यन्ये । खलुशब्दः पूरणार्थः संवेगस्य शेषगुणनिबंधनत्वेन प्राधान्यख्यापनार्थो वा। तथा ज्ञानावरणक्षयोपशमभावः ज्ञानावरणक्षयोपशमसत्ता संवेगादेव। तत्त्वाधिगमश्च तत्त्वातत्त्वपरिच्छेदश्च तथा जिनवचनाकर्णनस्य तीर्थकरभाषितश्रवणस्यैते गुणा इति ॥ तीर्थकरभाषिता चासौ सामाचारीति ॥

किं च देहस्वजनवित्तप्रतिबद्धः कश्चिदहृदयो न शृणोतीत्येपामसारताख्यापनाय जिनवचनश्रवणस्य सारतामुपदर्शयन्नाह–.

न वि तं करेइ देहो न य सयणो नेय वित्तसंघाओ ।
जिणवयणसवणजणिया जं संवेगाइया लोए ॥ ४ ॥

नापि तत्करोति देहो न च स्वजनो न च वित्तसंघातः ।
जिनवचनश्रवणजनिता यत्संवेगादयो लोके ॥४॥

नापि तत्करोति देहो न च स्वजनो न च वित्तसंघातः जिनवचनश्रवणजनिता यत्संवेगादयो लोके कुर्वन्ति । तथाह्यशाश्वतः प्रतिक्षणभङ्गुरो देहः शोकायासकारणं क्षणिकसंगमश्च स्वजनः अनिष्टितायासव्यवसायास्पदं[1] च वित्तसंघात इत्यसारता । तीर्थकरभाषिताकर्णनोद्भवाश्च संवेगादयो जातिजराम-

[1] अनिष्टितासद्व्यवसायास्पद ।

रणरोगशोकाद्युपद्रवप्रातरहितापवर्गहेतव इति सारता । अतः श्रोतव्यं जिनवचनमिति ॥ अथवा

होइ दढं अणुराओ जिणवयणे परमनिव्वुइकरम्मि ।
सवणाइगोयरो तह सम्मद्दिट्ठिस्स जीवस्स ॥ ५ ॥
भवति दृढमनुरागो जिनवचने परमनिर्वृतिकरे ।
श्रवणादिगोचरः तथा सम्यग्दृष्टेर्जीवस्य ॥ ५ ॥

यद्वा किमनेन निसर्गत एव भवति जायते दृढमत्यर्थमनुरागः प्रीतिविशेषः क्व जिनवचने तीर्थकरभाषिते किंविशिष्टे परमनिर्वृतिकरे उत्कृष्टसमाधिकरणशीले किंगोचरोऽनुरागो भवतीत्यत्राह । श्रवणादिगोचरः श्रवणश्रद्धानानुष्ठानविषय इत्यर्थः । तथा तेन प्रकारेण कस्येत्यत्राह सम्यग्दृष्टेर्जीवस्य प्रक्रान्तत्वाच्छ्रावकस्येत्यर्थः । अतोऽसौ श्रवणे प्रवर्तत एव ततश्च शृणोतीति श्रावक इति युक्तं इति गाथाभिप्रायः ॥

निरूपितः श्रावकशब्दार्थः । सांप्रतं द्वादशविधं श्रावकधर्ममुपन्यस्यन्नाह ।

पञ्चेव अणुव्वयाइं गुणव्वयाइं च हुंति तिन्नेव ।
सिक्खावयाइं चउरो सावगधम्मो दुवालसहा ॥ ६ ॥
पञ्चैवाणुव्रतानि गुणव्रतानि च भवन्ति त्रीण्येव ।
शिक्षाव्रतानि चत्वारि श्रावकधर्मो द्वादशधा ॥ ६ ॥

पञ्चेति सङ्ख्या । एवकारोऽवधारणे । पञ्चैव न चत्वारि षड्वा । अणूनि च तानि व्रतानि चाणुव्रतानि महाव्रतापेक्षया चाणुत्वमिति

स्थूरप्राणातिपातादिविनिवृत्तिरूपाणीत्यर्थः ॥ गुणव्रतानि च भवन्ति त्रीण्येव न न्यूनाधिकानि वा । अणुव्रतानामेवोत्तरगुणभूतानि व्रतानि गुणव्रतानि दिग्व्रतभोगोपभोगपरिमाणकरणानर्थदण्डविरतिलक्षणानि एतानि च भवन्ति त्रीण्येव । शिक्षापदानि च शिक्षाव्रतानि वा तत्र शिक्षा अभ्यासः स च चारित्रनिबन्धनविशिष्टक्रियाकलापविषयस्तस्य पदानि स्थानानि तद्विषयाणि वा व्रतानि शिक्षाव्रतानि एतानि च चत्वारि सामायिकदेशावकाशिकपौषधोपवासातिथिसंविभागाख्यानि । एवं श्रावकधर्मो द्वादशधा द्वादशप्रकार इति गाथासमासार्थः । अवयवार्थं तु महता प्रपञ्चेन ग्रन्थकार एव वक्ष्यति ॥ तथा चाह—

एयस्स मूलवत्थू सम्मत्तं तं च गंठिभेयम्मि ।
खयउवसमाइ तिविहं सुहायपरिणामरूवं तु ॥ ७ ॥

एतस्य मूलवस्तु सम्यक्त्वं तच्च ग्रन्थिभेदे ।
क्षायोपशमिकादि त्रिविधं शुभात्मपरिणामरूपं तु ॥७॥

एतस्यानन्तरोपन्यस्तस्य श्रावकधर्मस्य मूलवस्तु सम्यक्त्वं । वसन्त्यस्मिन्नणुव्रतादयो गुणास्तद्भावभावित्वेनेति वस्तु । मूलभूतं च तद्वस्तु च मूलवस्तु किं तत्सम्यक्त्वम् । उक्तं च

मूलं द्वारं प्रतिष्ठानमाधारो भाजनं निधिः ।
द्विषट्कस्यास्य धर्मस्य सम्यक्त्वं परिकीर्तितम् ॥ १ ॥

तच्च सम्यक्त्वं ग्रन्थिभेदे वक्ष्यमाणलक्षणकर्मग्रन्थिभेदे(३१-३२) इति भवति नान्यथेति भावः । तच्च क्षायोपशमिकादिभेदात्त्रिविधं

क्षायोपशमिकमौपशमिकं क्षायिकं च । यद्वा कारकादिशुभात्मपरिणामरूपं तु शुभः संक्लेशवर्जित आत्मपरिणामो जीवधर्मो रूपं यस्य तच्छुभात्मपरिणामरूपं तुरवधारणे शुभात्मपरिणामरूपमेव । अनेन तद्व्यतिरिक्तलिङ्गादिधर्मव्यवच्छेदमाह । व्यतिरिक्तधर्मत्वे तत उपकारायोगादिति ॥

जं जीवकम्मजोए जुज्जइ एयं अओ तयं पुव्विं ।
वोच्छं तओ कमेणं पच्छा तिविहं पि सम्मत्तं ॥८॥

यतो जीवकर्मयोगे युज्यते एतदतः तकं पूर्वम् ।
वक्ष्ये ततः क्रमेण पश्चात्त्रिविधमपि सम्यक्त्वम् ॥ ८ ॥

यतो यस्मात्कारणाज्जीवकर्मयोगे जीवकर्मसंबन्धे सति युज्यते एतत् घटते इदं सम्यक्त्वं कर्मक्षयोपशमादिरूपत्वात् अतोऽस्मात्कारणात्तकं जीवकर्मयोगं पूर्वमादौ वक्ष्ये ऽभिधास्ये । ततस्तदुत्तरकालं क्रमेण परिपाट्या पश्चात्त्रिविधमपि क्षायोपशमिकादि सम्यक्त्वं वक्ष्य इति ॥ तत्राह

जीवो अणाइनिहणो नाणावरणाइकम्मसंजुत्तो ।
मिच्छत्ताइनिमित्तं कम्मं पुण होइ अट्ठविहं ॥ ९ ॥

जीवो ऽनादिनिधनो ज्ञानावरणादिकर्मसंयुक्तः ।
मिथ्यात्वादिनिमित्तं कर्म पुनर्भवत्यष्टविधम् ॥ ९ ॥

जीवतीति जीवः । असौ अनादिनिधनः अनाद्यपर्यवसित इत्यर्थः । स च ज्ञानावरणादिकर्मणा समेकीभावेनान्योन्यव्याप्त्या

युक्तः संबद्धो ज्ञानावरणादिकर्मसंयुक्तः। मिथ्यात्वादिनिमित्तं मिथ्यात्वादिकारणं मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतव इति वचनात् (तत्त्वार्थाधिगमसूत्रम् ८-१) कर्म पुनर्ज्ञानावरणादि भवत्यष्टविधमष्टप्रकारमिति ॥ तथा चाह

पढमं नाणावरणं बीयं पुण होइ दंसणावरणं।
तइयं च वेयणीयं तहा चउत्थं च मोहणियं ॥ १० ॥

प्रथमं ज्ञानावरणं द्वितीयं पुनर्भवति दर्शनावरणम्।
तृतीयं च वेदनीयं तथा चतुर्थं च मोहनीयम् ॥ १० ॥

प्रथममाद्यं ज्ञानावरणं आव्रियतेऽनेनावृणोतीति वावरणं ज्ञानस्यावरणं ज्ञानावरणं ज्ञानं मतिज्ञानादि। द्वितीयं पुनर्भवति दर्शनावरणं पुनःशब्दो विशेषणार्थः सामान्यावबोधावारकत्वात् दर्शनं चक्षुर्दर्शनादि। तृतीयं च वेदनीयं सातासातरूपेण वेद्यत इति वेदनीयं रूढशब्दात्पङ्कजादिवत्। तथा चतुर्थं कर्म किं अत आह मोहनीयं मोहयतीति मोहनीयं मिथ्यात्वादिरूपत्वादिति।

आउअ नामं गोयं चरमं पुण अंतराइयं होइ।
मूलपयडीउ एया उत्तरपयडी अओ वुच्छं ॥ ११ ॥

आयुष्कं नाम गोत्रं चरमं पुनरन्तरायिकं भवति।
मूलप्रकृतय एता उत्तरप्रकृतीरतो वक्ष्ये ॥ ११ ॥

आयुष्कं नाम गोत्रं। तत्रैति याति वेत्यायुरननुभूतमेत्यनुभूतं च यातीत्यर्थः सर्वमपि कर्मैवंभूतं तथापि प्रक्रान्तभवप्रबन्धावि-

च्छेदादायुष्कमेव गृह्यते अस्ति च विच्छेदो मिथ्यात्वादिषु । तथा गत्यादिशुभाशुभनमनान्नामयतीति नाम । तथा गां वाचं त्रायत इति गोत्रं रूढिषु हि क्रिया कर्मव्युत्पत्त्यर्था नार्थक्रियार्था इत्युच्चैर्भावादिनिबन्धनमदृष्टमित्यर्थः । चरमं पुनः पर्यन्तवर्ति तत्पुनरन्तरायं भवति दानादिविघ्नोऽन्तरायस्तत्कारणमन्तरायमिति । मूलप्रकृतय एताः सामान्यप्रकृतय इत्यर्थः उत्तरप्रकृतीरेतद्विशेषरूपा अतो वक्ष्ये अत ऊर्ध्वमभिधास्य इति ॥ क्रमप्रयोजनं प्रथमगुणघातादि यथा कर्मप्रकृतिसंग्रहण्यामुक्तं तथैव द्रष्टव्यं ग्रन्थविस्तरभयाद्वस्तुतोऽप्रकान्तत्वाच्च न लिखितमिति । तथा

पढमं पंचवियप्पं मइसुयओहिमणकेवलावरणं ।
बीयं च नववियप्पं निद्दापण दंसणचउक्कं ॥ १२ ॥

प्रथमं पञ्चविकल्पं मतिश्रुतावधिमनःकेवलावरणम् ।
द्वितीयं च नवविकल्पं निद्रापञ्चकं दर्शनचतुष्कम् ॥१२॥

इह सूत्रक्रमप्रामाण्यात्प्रथममाद्यं ज्ञानावरणं पञ्चविकल्पमिति पञ्चभेदं । तानेव भेदानाह । मतिश्रुतावधिमनःकेवलावरणं मतिज्ञानाद्यावरणमित्यर्थः । द्वितीयं च दर्शनावरणं नवविकल्पं निद्रापञ्चकं दर्शनचतुष्कं चेति । निद्रापञ्चकमाह ।

निद्दा निद्दानिद्दा पयला तह होइ पयलपयला य ।
थीणद्धी अ सुरुद्दा निद्दापणगं जिणाभिहियं ॥१३॥

निद्रा निद्रानिद्रा प्रचला तथा भवति प्रचलाप्रचला च ।
स्त्यानर्द्धिश्च सुरुद्रा निद्रापञ्चकं जिनाभिहितम् ॥१३॥

निद्रादीनां स्वरूपम् ।

सुहपडिबोहा निद्दा दुहपडिबोहा य निद्दनिद्दा य ।
पयला होइ ठियस्स उ पयलापयला य चंकमओ ॥
अइसंकिलिट्ठकम्माणुवेयणे होइ थीणगिद्धी उ ।
महनिद्दा दिणचिंतियवावारपसाहणी पायम् ॥

अत्रेत्थंभूतनिद्रादिकारणं कर्म अनन्तरं दर्शनविघातित्वाद्दर्शनावरणं प्राग्यमिति । दर्शनचतुष्टयमाह ।

**नयणेयरोहिकेवल दंसणवरणं चउव्विहं होइ।**
**सायासाय दुभेयं च वेयणिज्जं मुणेयव्वं ॥ १४ ॥**

**नयनेतरावधिकेवलदर्शनावरणं चतुर्विधं भवति ।**
**सातासातद्विभेदं च वेदनीयं मुणितव्यम् ॥ १४ ॥**

*नयनेतरावधिकेवलदर्शनावरणं चतुर्विधं भवति* । आवरणशब्दः प्रत्येकमभिसंबध्यते । नयनं लोचनं चक्षुरिति पर्यायाः ततश्च नयनदर्शनावरणं चक्षुर्दर्शनावरणं चेति चक्षुःसामान्योपयोगावरणमित्यर्थः । इतरग्रहणादचक्षुर्दर्शनावरणं शेषेन्द्रियदर्शनावरणमिति । एवमवधिकेवलयोरपि योजनीयं ॥ सातासातद्विभेदं च वेदनीयं मुणितव्यं । सातवेदनीयमसातवेदनीयं च । आल्हादरूपेण यद्वेद्यते तत्सातवेदनीयं । परितापरूपेण यद्वेद्यते तदसातवेदनीयं । मुणितव्यं ज्ञातव्यमिति ॥

**दुविहं च मोहणियं दंसणमोहं चरित्तमोहं च ।**
**दंसणमोहं तिविहं सम्मेयरमीसवेयणियं ॥ १५ ॥**

द्विविधं च मोहनीयं दर्शनमोहनीयं चारित्रमोहनीयं च ।
दर्शनमोहनीयं त्रिविधं सम्यक्त्वेतरमिश्रवेदनीयम् ॥१५॥

द्वे विधेऽस्य तद्द्विविधं द्विप्रकारं । चः समुच्चये । मोहनीयं प्राङ्निरूपितशब्दार्थं । द्वैविध्यमेवाह । दर्शनमोहनीयं चारित्रमोहनीयं च । तत्र दर्शनं सम्यग्दर्शनं तन्मोहयतीति दर्शनमोहनीयं । चारित्रं विरतिरूपं तन्मोहयतीति चारित्रमोहनीयं । तत्र दर्शनमोहनीयं त्रिविधं त्रिप्रकारं सम्यक्त्वेतरमिश्रवेदनीयं । सम्यक्त्वरूपेण वेद्यते यत्तत्सम्यक्त्ववेदनीयं । इतरग्रहणान्मिथ्यात्वरूपेण वेद्यते यत्तन्मिथ्यात्ववेदनीयं । मिश्रग्रहणात्सम्यग्मिथ्यात्वरूपेण वेद्यते यत्तत्सम्यक्त्वमिथ्यात्ववेदनीयं । एवमयं वेदनीयशब्दः प्रत्येकमभिसंबध्यते । इदं च बन्धं प्रत्येकविधमेव सत्कर्मतया त्रिविधमिति ॥ आह । सम्यक्त्ववेदनीयं कथं दर्शनमोहनीयं न हि तद्दर्शनं मोहयति तस्यैव दर्शनत्वात् । उच्यते मिथ्यात्वप्रकृतित्वादतिचारसंभवादौपशमिकादिमोहनाच्च दर्शनमोहनीयमिति ॥

दुविहं चरित्तमोहं कसाय तह नोकसाय वेयणियं ।
सोलसनवभेयं पुण जहासंखं मुणेयव्वं ॥ १६ ॥

द्विविधं चारित्रमोहनीयं कषायवेदनीयं तथा नोकषायवेदनीयं । षोडशनवभेदं पुनर्यथासंख्यं मुणितव्यं ॥ १६ ॥

द्विविधं द्विप्रकारं चारित्रमोहनीयं प्राङ्निरूपितशब्दार्थं । कषायवेदनीयं तथा नोकषायवेदनीयं चेति । वेदनीयशब्दः प्रत्येकमभिसंबध्यते । तत्र क्रोधादिकषायरूपेण यद्वेद्यते तत्कषायवेदनीयं ।

तथा स्त्रीवेदादिनोकषायरूपेण यद्वेद्यते तन्नोकषायवेदनीयं । अस्यैव भेदानाह ॥ षोडश नवभेदं पुनर्यथासङ्ख्येन मुणितव्यं । षोडशभेदं कषायवेदनीयं । नवभेदं नोकषायवेदनीयं । भेदाननन्तरं वक्ष्यत्येवेति ॥ तत्र कषायभेदानाह ।

अण अप्पच्चक्खाणा पच्चक्खाणावरणा य संजलणा ।
कोहमणमायलोहा पत्तेयं चउवियप्पत्ति ॥ १७ ॥

अनन्तानुबन्धिनो ऽप्रत्याख्यानाः प्रत्याख्यानावरणाः च संज्वलनाः ।
क्रोधमानमायालोभाः प्रत्येकं चतुर्विकल्पा इति ॥ १७ ॥

अण इति सूचनात्सूत्रं इति कृत्वा अनन्तानुबन्धिनो गृह्यन्ते इह पारंपर्येणानन्तं भवमनुबद्धुं शीलं येषामिति अनन्तानुबन्धिनः उदयस्थाः सम्यक्त्वविघातिन इति कृत्वा ॥ अविद्यमानप्रत्याख्याना अप्रत्याख्याना देशप्रत्याख्यानं सर्वप्रत्याख्यानं च नैषामुदये लभ्यते इत्यर्थः ॥ प्रत्याख्यानमावृण्वन्ति मर्यादया ईषद्वेति प्रत्याख्यानावरणाः आङ्मर्यादायामीषदर्थे वा मर्यादायां सर्वविरतिमावृण्वन्ति न देशविरतिं ईषदर्थेऽपि ईषद्वृण्वन्ति सर्वविरतिमेव न देशविरतिं देशविरतिश्च भूयसी स्तोकादपि विरतस्य देशविरतिभावात् ॥ चः समुच्चये ॥ ईषत्परीषहादिसन्निपातज्वलनात्संज्वलनाः सम् शब्द ईषदर्थे इति ॥ एवं क्रोधमानमायालोभाः प्रतीतस्वरूपाः प्रत्येकं चतुर्विकल्पा इति । क्रोधोऽनन्तानुबन्ध्यादिभेदाच्चतुर्विकल्पः ॥ एवं मानादयोऽपीति ॥ स्वरूपं चैतेषामित्यमाहुः

जलरेणुपुढविपव्वयराईसरिसो चउव्विहो कोहो।
तिणिसलयाकट्ठट्ठियसेलत्थंभोवमो माणो ॥ १ ॥
मायावलेहिगोमुत्तिमिंढसिंगघणवंसमूलसमा ।
लोहो हलिद्दखंजणकद्दमकिमिरागसारिथो ॥२॥[कर्मग्र.१-१९-२०]
पक्खचउम्मासवच्छरजावजीवाणुगामिणो कमसो।
देवनरतिरियनारयगतिसाहणहेयवो भणिया ॥ ३ ॥ इति

अधुना नोकषायभेदानाह।

**इत्थीपुरिसनपुंसगवेयतिगं चेव होइ नायव्वं ।**
**हास रइ अरइ भयं सोग दुगंछा य छक्कं ति ॥१८॥**

**स्त्रीपुरुषनपुंसकवेदत्रिकं चैव भवति ज्ञातव्यम्।**
**हास्यं रतिररतिर्भयं शोको जुगुप्सा चैव षट्कमिति ॥ १८ ॥**

स्त्रीपुरुषनपुंसकवेदत्रिकं चैव भवति ज्ञातव्यं नोकषायवेद्यत-ेति भावः । तत्र वेद्यत इति वेदः । स्त्रियः स्त्रीवेदोदयात्पु-ष्याभिलाषः । पुरुषस्य पुरुषवेदोदयात्स्त्र्यभिलाषः । नपुंस-कस्य तु नपुंसकवेदोदयादुभयाभिलाषः । हास्यं रतिः अर-तिर्भयं शोको जुगुप्सा चैव षट्कमिति । तत्र सनिमित्तमनिमित्तं वा हास्यं प्रतीतमेव । बाह्याभ्यन्तरेषु वस्तुषु प्रीतिः रतिः । एते-ष्वेवाप्रीतिररतिः । भयं त्रासः । परिदेवनादिलिङ्गं शोकः । चेत-नाचेतनेषु वस्तुषु व्यलीककरणं जुगुप्सा । यदुदयादेते हास्यादयो भवन्ति ते नोकषायाख्या मोहनीयकर्मभेदा इति भावः । नोक-षायता चैतेषामाद्यकषायत्रयविकल्पानुवर्तित्वेन । तथाहि न क्षी-णेषु द्वादशस्वमीषां भाव इति ॥

१ नोकषायभेदनयेति ।

आउं च एत्थ कम्मं चउव्विहं नवरं होइ नायव्वं।
नारयतिरियनरामरगइभेयविभागओ भणिअं॥१९

आयुष्कं च अत्र कर्म चतुर्विधं नवरं भवति ज्ञातव्यम्
नारकतिर्यङ्नरामरगतिभेदविभागतो भणितम्॥ १९॥

आयुष्कं च प्राङ्निरूपितशब्दार्थं अत्र प्रक्रमे क्रियत इति क चतुर्विधं चतुःप्रकारं भवति ज्ञातव्यं। नवरमिति निपातः स्व गतानेकभेदमदर्शनार्थः। चातुर्विध्यमेवाह। नारकतिर्यङ्नरामरग तिभेदविभागतो गतिभेदविभागेन भणितमुक्तं तीर्थकरगणधरै तद्यथा नारकायुष्कं तिर्यगायुष्कं मनुष्यायुष्कं देवायुष्कमिति॥

नामं दुचत्तभेयं गइजाइसरीरअंगुवंगे य।
बंधणसंघायणसंघयणसंठाणनामं च॥ २०॥

नाम द्विचत्वारिंशत्भेदं गतिजातिशरीराङ्गोपाङ्गानि च।
बन्धनसंघातनसंहननसंस्थाननाम च॥ २०॥

नाम प्रागभिहितशब्दार्थं द्विचत्वारिंशत्प्रकारं। भेदानाह। गतिनाम यदुदयान्नरकादिगतिगमनं। जातिनाम यदुदयादेकेन्द्रियादिजात्युत्पत्तिः आह स्पर्शनादीन्द्रियावरणक्षयोपशमसद्भावादेकेन्द्रियादित्वं नाम चौदयिको भावः तत्कथमेतदिति उच्यते तदुपयोगादिहेतुः क्षयोपशम एकेन्द्रियादि संज्ञानिबन्धनं च नामेति न दोषः। शरीरनाम यदुदयादौदारिकादिशरीरभावः। अङ्गोपाङ्गनाम यदुदयादङ्गोपाङ्गनिर्वृत्तिः शिरःप्रभृतीन्यङ्गानि श्रोत्रादीन्यङ्गोपाङ्गानि। उक्तं च

सीसमुरोदरपिट्ठी दो बाहू ऊरूभयाय अट्ठंगा।
अंगुलिमाइ उवंगा अंगोवंगाइं सेसाइं ॥ १ ॥

बन्धननाम यत्सर्वात्मप्रदेशैर्गृहीतानां गृह्यमाणानां च पुद्गलानां संबन्धजनकं अन्यशरीरपुद्गलैर्वा जतुकल्पमिति। संघातननाम यदुदयादौदारिकादिशरीरयोग्यपुद्गलग्रहणे शरीररचना भवति। संहनननाम यद्वज्रऋषभनाराचादिसंहनननिमित्तं। संस्थाननाम समचतुरस्रादिसंस्थानकारणं। चः समुच्चय इति गाथार्थः॥

तह वन्नगंधरसफासनामगुरुलहू य बोद्धव्वं।
उवघायपराघायाणुपुव्विऊसासनामं च ॥ २१ ॥
तथा वर्णगन्धरसस्पर्शनामागुरुलघु च बोद्धव्यम्।
उपघातपराघातानुपूर्व्युच्छ्वासनाम च ॥ २१ ॥

तथा वर्णनाम यदुदयात्कृष्णादिवर्णनिवृत्तिः। एवं गन्धरसस्पर्शेष्वपि स्वभेदापेक्षया भावनीयमिति। अगुरुलघु च बोद्धव्यं अत्रानुस्वारदीर्घत्वेऽलाक्षणिके सुखोच्चारणार्थे तूपन्यस्ते तत्रागुरुलघुनाम यदुदयान्न गुरुर्नापि लघुर्भवति देह इति एकान्ततद्भावे[1] सदा निमज्जनोर्ध्वगमनप्रसंगः। उपघातनाम यदुदयादुपहन्यते। पराघातनाम यदुदयात्परानाहन्ति। आनुपूर्वीनाम यदुदयादपान्तरालगतौ नियतदेशमनुश्रेणिगमनं, नियत एवाङ्गविन्यास इत्यन्ये। उच्छ्वासनाम यदुदयादुच्छ्वासनिःश्वासौ भवतः आह यद्येवं पर्याप्तिनाम्नः कोपयोग इति उच्यते पर्याप्तिः करणशक्तिः उच्छ्वासनामवत एव तन्निवृत्तौ सहकारिकारणं इत्यु-

१ एकान्ततद्भावे।

क्षेपणशक्तिमतो धनुर्ग्रहणशक्तिवत्। एवमन्यत्रापि भिन्नविषयता सूक्ष्मधियावसेया। चः समुच्चये इति।

**आयवउज्जोयविहायगई य तसथावराभिहाणं च।**
**बायरसहुमं पज्जुत्तापज्जत्तं च नायव्वं ॥ २२ ॥**

*आतपोद्योतविहायोगति त्रसस्थावराभिधानं च।*
*बादरसूक्ष्मपर्याप्तापर्याप्तं च ज्ञातव्यं ॥ २२ ॥*

आतपनाम यदुदयादातपवान्भवति पृथिवीकायं आदित्यमण्डलादिवत्। उद्योतनाम यदुदयादुद्योतवान्भवति खद्योतकादिवत्। विहायोगतिनाम यदुदयाच्चंक्रमणं इदं च द्विविधं प्रशस्ताप्रशस्तभेदात् प्रशस्तं हंसगजादीनां अप्रशस्तमुष्ट्रादीनामिति। त्रसनाम यदुदयाच्चलनं स्पन्दनं च भवति त्रसत्वमेवान्ये। स्थावराभिधानं चेति स्थावरनाम यदुदयादस्पन्दनो भवति स्थावर एवान्ये। चः समुच्चये। बादरनाम यदुदयाद्बादरो भवति स्थूर इत्यर्थः इन्द्रियगम्य इत्यन्ये। सूक्ष्मनाम यदुदयात्सूक्ष्मो भवति अत्यन्तश्लक्ष्णः अतीन्द्रिय इत्यर्थः। पर्याप्तकनाम यदुदयादिन्द्रियादिनिष्पत्तिर्भवति। अपर्याप्तकनाम उक्तविपरीतं यदुदयात्संपूर्णपर्याप्त्यनिवृत्तिर्न त्वाहारशरीरेन्द्रियपर्याप्त्यनिवृत्तिरपि यस्मादागामिभवायुष्कं बध्वा म्रियंते सर्व एव देहिनः तच्चाहारशरीरेन्द्रियपर्याप्त्या पर्याप्तानामेव बध्यत इति।

**पत्तेयं साहारण-थिरमथिरसुहासुहं च नायव्वं।**
**सूभगदूभगनामं सूसर तह दूसरं चेव ॥ २३ ॥**

प्रत्येकं साधारणं स्थिरमस्थिरं शुभाशुभं च ज्ञातव्यम्।
सुभगदुर्भगनाम सुस्वरं तथा दुःस्वरं चैव ॥ २३ ॥

प्रत्येकनाम यदुदयादेको जीव एकमेव शरीरं निवर्तयति। साधारणनाम यदुदयाद्बहवो जीवा एकं शरीरं निवर्तयंति। स्थिरनाम यदुदयाच्छरीरावयवानां शिरोऽस्थिदन्तादीनां स्थिरता भवति। अस्थिरनाम यदुदयात्तदवयवानामेव चलता भवति कर्णजिह्वादीनां। शुभाशुभं च ज्ञातव्यं। तत्र शुभनाम यदुदयाच्छरीरावयवानां शुभता यथा शिरसः विपरीतमशुभनाम यथा पादयोस्तथा शिरसा स्पृष्टस्तुष्यति पादाहतस्तु रुष्यति, कामिनीव्यवहारे व्यभिचार इति चेत् न, तस्य मोहनीयनिबन्धनत्वात् वस्तुस्थितिश्चेह चिन्त्यत इति। सुभगनाम यदुदयात्काम्यो भवति। तद्विपरीतं च दुर्भगनामेति। सुस्वरनाम यदुदयात्सौस्वर्यं भवति श्रोतुः प्रीतिहेतुः। तथा दुःस्वरं चैवेति सुस्वरनामोक्तविपरीतमिति॥

आइज्जमणाइज्जं जसकित्तीनाममजसकित्ती य।
निम्माणनाममउलं चरमं तित्थयरनामं च ॥२४॥

आदेयमनादेयं यशःकीर्तिनाम अयशःकीर्ति च।
निर्माणनाम अतुलं चरमं तीर्थकरनाम च ॥ २४ ॥

आदेयनाम यदुदयादादेयो भवति यच्चेष्टते भाषते वा तत्सर्वं लोकः प्रमाणीकरोति[1] तद्विपरीतमनादेयं। यशःकीर्तिनाम यदुदयाद्यशःकीर्तिभावः यशःकीर्त्योर्विशेषः दानपुण्यफला कीर्तिः

1 प्रमाणं करोति
2

क्षेपणशक्तिमतो धनुर्ग्रहणशक्तिवत् । एवमन्यत्रापि भिन्नविषयता सूक्ष्मधियात्रसेया। चः समुच्चये इति।

आयवउज्जोयविहायगई य तसथावराभिहाणं च।
वायरसहुमं पज्जुत्तापज्जत्तं च नायव्वं ॥ २२ ॥
आतपोद्योतविहायोगति त्रसस्थावराभिधानं च ।
बादरसूक्ष्मपर्याप्तापर्याप्तं च ज्ञातव्यं ॥ २२ ॥

आतपनाम यदुदयादातपवान्भवति पृथिवीकाये आदित्यमण्डलादिवत् । उद्योतनाम यदुदयादुद्योतवान्भवति खद्योतकादिवत् । विहायोगतिनाम यदुदयाचंक्रमणं इदं च द्विविधं प्रशस्ताप्रशस्तभेदात् प्रशस्तं हंसगजादीनां अप्रशस्तमुष्ट्रादीनामिति । त्रसनाम यदुदयाच्चलनं स्पन्दनं च भवति त्रसत्वमेवान्ये । स्थावराभिधानं चेति स्थावरनाम यदुदयादस्पन्दनो भवति स्थावर एवान्ये । चः समुच्चये । बादरनाम यदुदयाद्बादरो भवति स्थूर इत्यर्थः इन्द्रियगम्य इत्यन्ये । सूक्ष्मनाम यदुदयात्सूक्ष्मो भवति अत्यन्तश्लक्ष्णः अतीन्द्रिय इत्यर्थः । पर्याप्तकनाम यदुदयादिन्द्रियादिनिष्पत्तिर्भवति । अपर्याप्तकनाम उक्तविपरीतं यदुदयात्संपूर्णपर्याप्त्यनिवृत्तिर्न त्वाहारशरीरेन्द्रियपर्याप्त्यनिवृत्तिरपि यस्मादागामिभवायुष्कं बध्वा म्रियंते सर्व एव देहिनः तच्चाहारशरीरेन्द्रियपर्याप्त्या पर्याप्तानामेव बध्यत इति ।

पत्तेयं साहारण-थिरमथिरसुहासुहं च नायव्वं।
सूभगदूभगनामं सूसर तह दूसरं चेव ॥ २३ ॥

प्रत्येकं साधारणं स्थिरमस्थिरं शुभाशुभं च ज्ञातव्यम्।
सुभगदुर्भगनाम सुस्वरं तथा दुःस्वरं चैव ॥ २३ ॥

प्रत्येकनाम यदुदयादेको जीव एकमेव शरीरं निवर्तयति। साधारणनाम यदुदयाद्बहवो जीवा एकं शरीरं निवर्तयंति। स्थिरनाम यदुदयाच्छरीरावयवानां शिरोऽस्थिदन्तादीनां स्थिरता भवति। अस्थिरनाम यदुदयात्तदवयवानामेव चलता भवति कर्णजिह्वादीनां। शुभाशुभं च ज्ञातव्यं। तत्र शुभनाम यदुदयाच्छरीरावयवानां शुभता यथा शिरसः विपरीतमशुभनाम यथा पादयोस्तथा शिरसा स्पृष्टस्तुष्यति पादाहतस्तु रुष्यति, कामिनीव्यवहारे व्यभिचार इति चेत् न, तस्य मोहनीयनिबन्धनत्वात् वस्तुस्थितिश्चेह चिन्त्यत इति। सुभगनाम यदुदयात्काम्यो भवति। तद्विपरीतं च दुर्भगनामेति। सुस्वरनाम यदुदयात्सौस्वर्यं भवति श्रोतुः प्रीतिहेतुः। तथा दुःस्वरं चैवेति सुस्वरनामोक्तविपरीतमिति ॥

आइज्जमणाइज्जं जसकित्तीनाममजसकित्ती य।
निम्माणनाममउलं चरमं तित्थयरनामं च ॥२४॥

आदेयमनादेयं यशःकीर्तिनाम अयशःकीर्ति च।
निर्माणनाम अतुलं चरमं तीर्थकरनाम च ॥ २४ ॥

आदेयनाम यदुदयादादेयो भवति यच्चेष्टते भाषते वा तत्सर्वं लोकः प्रमाणीकरोति तद्विपरीतमनादेयं। यशःकीर्तिनाम यदुदयाद्यशःकीर्तिभावः यशःकीर्त्योर्विशेषः दानपुण्यफला कीर्तिः

१ प्रमाण करोति
२

क्षेपणशक्तिमतो धनुर्ग्रहणशक्तिवत्। एवमन्यत्रापि भिन्नविषयता सूक्ष्मधियावसेया। चः समुच्चये इति।

आयवउज्जोयविहायगई य तसथावराभिहाणं च।
बायरसहुमं पज्जत्तापज्जत्तं च नायव्वं ॥ २२ ॥
आतपोद्योतविहायोगति त्रसस्थावराभिधानं च।
बादरसूक्ष्मपर्याप्तापर्याप्तं च ज्ञातव्यं ॥ २२ ॥

आतपनाम यदुदयादातपवान्भवति पृथिवीकाये आदित्यमण्डलादिवत्। उद्योतनाम यदुदयादुद्योतवान्भवति खद्योतकादिवत्। विहायोगतिनाम यदुदयाचंक्रमणं इदं च द्विविधं प्रशस्ताप्रशस्तभेदात् प्रशस्तं हंसगजादीनां अप्रशस्तमुष्ट्रादीनामिति। त्रसनाम यदुदयाचलनं स्पन्दनं च भवति त्रसत्वमेवान्ये। स्थावराभिधानं चेति स्थावरनाम यदुदयादस्पन्दनो भवति स्थावर एवान्ये। चः समुच्चये। बादरनाम यदुदयाद्बादरो भवति स्थूर इत्यर्थः इन्द्रियगम्य इत्यन्ये। सूक्ष्मनाम यदुदयात्सूक्ष्मो भवति अत्यन्तश्लक्ष्णः अतीन्द्रिय इत्यर्थः। पर्याप्तकनाम यदुदयादिन्द्रियादिनिष्पत्तिर्भवति। अपर्याप्तकनाम उक्तविपरीतं यदुदयात्संपूर्णपर्याप्त्यनिवृत्तिर्न त्वाहारशरीरेन्द्रियपर्याप्त्यनिवृत्तिरपि यस्मादागामिभवायुष्कं बध्वा म्रियंते सर्व एव देहिनः तच्चाहारशरीरेन्द्रियपर्याप्त्या पर्याप्तानामेव बध्यत इति।

पत्तेयं साहारण-थिरमथिरसुहासुहं च नायव्वं।
सूभगदूभगनामं सूसर तह दूसरं चेव ॥ २३ ॥

प्रत्येकं साधारणं स्थिरमस्थिरं शुभाशुभं च ज्ञानव्यम्।
सुभगदुर्भगनाम सुस्वरं तथा दुःस्वरं चैव ॥ २३ ॥

प्रत्येकनाम यदुदयादेको जीव एकमेव शरीरं निर्वर्तयति। साधारणनाम यदुदयाद्बहवो जीवा एकं शरीरं निर्वर्तयंति। स्थिरनाम यदुदयाच्छरीरावयवानां शिरोऽस्थिदन्तादीनां स्थिरता भवति। अस्थिरनाम यदुदयात्तदवयवानामेव चलता भवति कर्णजिह्वादीनां। शुभाशुभं च ज्ञातव्यं। तत्र शुभनाम यदुदयाच्छरीरावयवानां शुभता यथा शिरसः विपरीतमशुभनाम यथा पादयोस्तथा शिरसा स्पृष्टस्तुष्यति पादाहतस्तु रुष्यति, कामिन्याप्यवहारे व्यभिचार इति चेत् न, तस्य मोहनीयनिबन्धनत्वात् वस्तुस्थितिश्चेह चिन्त्यत इति। सुभगनाम यदुदयात्काम्यो भवति। तद्विपरीतं च दुर्भगनामेति। सुस्वरनाम यदुदयात्सौस्वर्यं भवति श्रोतुः प्रीतिहेतुः। तथा दुःस्वरं चैवेति सुस्वरनामोक्तविपरीतमिति ॥

आइज्जमणाइज्जं जसकित्तीनाममजसकित्ती य।
निम्माणनाममउलं चरमं तित्थयरनामं च ॥२४॥

आदेयमनादेयं यशःकीर्तिनाम अयशःकीर्ति च।
निर्माणनाम अतुलं चरमं तीर्थकरनाम च ॥ २४ ॥

आदेयनाम यदुदयादादेयो भवति यच्चेष्टते भाषते वा तत्सर्वं लोकः प्रमाणीकरोति तद्विपरीतमनादेयं। यशःकीर्तिनाम यदुदयाद्यशःकीर्तिभावः यशःकीर्त्योर्विशेषः दानपुण्यफला कीर्तिः

१ प्रमाणं करो॰।

पराक्रमकृतं यशः । अयशःकीर्तिनाम चोक्तविपरीतं । निर्माणनाम यदुदयात्सर्वजीवानां जातौ अङ्गोपाङ्गनिवेशो भवति जातिलिङ्गाकृतिव्यवस्थानियम इत्यन्ये अतुलं प्रधानं । चरमं प्रधानत्वात्सूत्रक्रमप्रामाण्याच्चेति तीर्थकरनाम यदुदयात्सदेवमनुष्यासुरस्य जगतः पूज्यो भवति । चः समुच्चये इति ॥

गोयं च दुविहभेयं उच्चागोयं तहेव नीयं च।
चरमं च पंचभेअं पन्नत्तं वीयरागेहिं ॥ २५ ॥
गोत्रं च द्विविधभेदमुच्चैर्गोत्रं तथैव नीचं च।
चरमं च पञ्चभेदं प्रज्ञप्तं वीतरागैः ॥ २५ ॥

गोत्रं प्राङ्निरूपितशब्दार्थं भवति द्विविधं द्विप्रकारं उच्चैर्गोत्रं तथैव नीचं चेति नीचैर्गोत्रं च । तत्रोच्चैर्गोत्रं यदुदयादज्ञानी विरूपोऽपि सत्कुलमात्रादेव पूज्यते । नीचैर्गोत्रं तु यदुदयाज्ज्ञानादियुक्तोऽपि निंद्यते ॥ चरमं च पर्यन्तवर्ति च सूत्रक्रमप्रामाण्यात्पञ्चभेदं पञ्चप्रकारं प्रज्ञप्तं प्ररूपितं वीतरागैरर्हद्भिरिति ॥

तं दाणलाभभोगोवभोगविरियंतराइयं जाण।
चित्तं पोग्गलरूवं विन्नेयं सव्वमेवेयं ॥ २६ ॥
तद्दानलाभभोगोपभोगवीर्यान्तरायिकं जानीहि ।
चित्रं पुद्गलरूपं विज्ञेयं सर्वमेवेदम् ॥ २६ ॥

तद्दानलाभभोगोपभोगवीर्यान्तरायं जानीहि । तत्र दानान्तरायं यदुदयात्सति दातव्ये प्रतिग्राहके च पात्रविशेषे दानफलं च जा-

नघोरसहते दातुं । लाभान्तरायं तु यदुदयात्सत्यपि प्रसिद्धे दातरि तस्यापि लभ्यस्य भावे याञ्चाकुशलोऽपि न लभते । भोगान्तरायं तु यदुदयात्सति विभवे अन्तरेण विरतिपरिणामं न भुंक्ते भोगान् । एवमुपभोगान्तरायमपि । नवरं भोगोपभोगयोरेवं विशेषः सकृद्भुज्यत इति भोगः आहारमाल्यादिः पुनः पुनरुपभुज्यत इत्युपभोगः भवनवलयादिः । उक्तं च

सइ भुञ्जइत्ति भोगो सो पुण आहारफुल्लमाईसु ।
उवभोगो उ पुणो पुण उवभुज्जइ भुवणवलयाई ॥

वीर्यान्तरायं तु यदुदयान्निरुजो वयस्थश्चाल्पवीर्यो भवति। चित्रं पुद्गलरूपं विज्ञेयं सर्वमेवेदं चित्रमनेकरूपं चित्रफलहेतुत्वात्, पुद्गलरूपं परमाण्वात्मकं न वासनादिरूपममूर्तमिति, विज्ञेयं ज्ञातव्यं भिन्नालम्बनं पुनःक्रियाभिधानमदुष्टमेव, सर्वेदं ज्ञानावरणादि कर्मेति॥

**एयस्स एगपरिणामसंचियस्स उ ठिई समक्खाया ।**
**उक्कोसेयरभेया तमहं वुच्छं समासेणं ॥ २७ ॥**

एतस्यैकपरिणामसंचितस्य तु स्थितिः समाख्याता ।
उत्कृष्टेतरभेदात्तामहं वक्ष्ये समासेन ॥ २७ ॥

एतस्य चानन्तरोदितस्य कर्मणः एकपरिणामसंचितस्य तुशब्दस्य विशेषणार्थत्वात्प्रायः क्लिष्टैकपरिणामोपात्तस्येत्यर्थः स्थितिः समाख्याता सांसारिकाशुभफलदातृत्वेनावस्थानं उक्तमागम इति गम्यते । उत्कृष्टेतरभेदादुत्कृष्टा जघन्या च समाख्यातेति भावः

तां स्थितिमहं वक्ष्ये,ऽहमित्यात्मनिर्देशो, वक्ष्येऽभिधास्ये, समासेन संक्षेपेण न तूत्तरप्रकृतिभेदस्थितिप्रतिपादनप्रपञ्चेनेति ।

आइल्लाणं तिन्हं चरमस्स य तीस कोडिकोडीओ।
अयराण मोहणिज्जस्स सत्तरी होइ विन्नेया ॥२८॥

आद्यानां त्रयाणां चरमस्य च त्रिंशत्कोटिकोट्यः ।
अतराणां मोहनीयस्य सप्ततिर्भवति विज्ञेया ॥२८॥

आद्यानां त्रयाणां ज्ञानावरणदर्शनावरणवेदनीयानां चरमस्य च सूत्रक्रमप्रामाण्यात्पर्यन्तवर्तिनोऽन्तरायस्येति त्रिंशत्सागरोपमकोटिकोट्यः अतराणामिति सागरोपमानां मोहनीयस्य सप्ततिर्भवति विज्ञेया सागरोपमकोटिकोट्य इति ॥

नामस्स य गोयस्स य वीसं उक्कोसिया ठिई भणिया।
तित्तीससागराइं परमा आउस्स बोद्धव्वा ॥ २९ ॥

नाम्नः च गोत्रस्य च विंशतिरुत्कृष्टा स्थितिर्भणिता ।
त्रयस्त्रिंशत्सागराणि परमा आयुषो बोद्धव्या ॥ २९ ॥

नाम्नश्च गोत्रस्य च विंशतिः सागरोपमकोटिकोट्य इति गम्यते उत्कृष्टा स्थितिर्भणिता सर्वोत्तमा स्थितिः प्रतिपादिता तीर्थकरगणधरैरिति । त्रयस्त्रिंशत्सागरोपमानि परमा प्रधानायुःकर्मणो बोद्धव्येति ॥

अधुना जघन्यामाह ।

वेयणियस्स य बारस नामग्गोयाण अट्ठ उ मुहुत्ता।
सेसाण जहन्नठिई भिन्नमुहुत्तं विणिद्दिट्ठा ॥ ३० ॥

वेदनीयस्य च द्वादश नामगोत्रयोरष्ट मुहूर्ताः।
शेषाणां जघन्या स्थितिर्भिन्नमुहूर्तं विनिर्दिष्टा ॥ ३० ॥

वेदनीयस्य कर्मणो जघन्या स्थितिरिति योगः द्वादशमुहूर्ता नामगोत्रकर्मणोरष्टौ मुहूर्ता इत्यत्र मुहूर्तशब्दः प्रत्येकमभिसंबध्यते। द्विघटिको मुहूर्तः। शेषाणां ज्ञानावरणादीनां जघन्या स्थितिर्भिन्नमुहूर्तं विनिर्दिष्टान्तर्मुहूर्तं प्रतिपादितेति। प्रकृतयोजनायाह।

एवं ठिइयस्स जया घंसणघोलणनिमित्तओ कहवि।
खवियां कोडाकोडी सव्वा इक्कं पमुत्तूणं ॥ ३१ ॥

एवंस्थितिकस्य यदा घर्षणघूर्णननिमित्ततः कथमपि।
क्षपिताः कोटिकोट्यः सर्वा एकां प्रमुच्य ॥३१॥

एवंस्थितेरस्य कर्मणः यदा यस्मिन्काले घर्षणघूर्णननिमित्ततो नानायोनिषु चित्रसुखदुःखानुभवनेनेत्यर्थः कथमपि केनचित्प्रकारेण क्षपिताः प्रलयं नीताः कोटिकोट्यः सर्वा ज्ञानावरणादिसंबन्धिन्यः एकां विमुच्य विहायेति।

तीइ वि य थोवमित्ते खविए इत्थंतरम्मि जीवस्स।
हवइ हु अभिन्नपुव्वो गंठी एवं जिणा बिंति ॥३२॥

तस्या अपि च स्तोकमात्रे क्षपितेऽत्रान्तरे जीवस्य।
भवति तु अभिन्नपूर्वो ग्रन्थिरेवं जिना ब्रुवते ॥ ३२ ॥

तस्या अपि च सागरोपमकोटिकोट्याः स्तोकमात्रे पल्योपमासङ्ख्येयभागे क्षपितेऽपनीते अत्रान्तरेऽस्मिन्भागे जीवस्यात्मनः भवति अभिन्नपूर्वो तुशब्दस्यावधारणार्थत्वाद्व्यवहितोपन्यासाच्चाभिन्नपूर्व एव ग्रन्थिरिव ग्रन्थिर्दुःखेनोद्वेष्टयमानत्वादेवं जिना ब्रुवत एवं तीर्थकराः प्रतिपादयन्तीति। उक्तं च तत्समयज्ञैः।

गंट्ठित्ति सुदुब्भेउ कक्खडघणरूढगूढगंठिव्व।
जीवस्स कम्मजणिओ घणरागद्दोसपरिणामो ॥ १ ॥ इति॥

भिन्नंमि तंमि लाभो जायइ परमपयहेउणो नियमा।
सम्मत्तस्स पुणो तं बंधेण न वोलइ कयाइ ॥ ३३ ॥

भिन्ने तस्मिन् लाभो जायते परमपदहेतोर्नियमात्।
सम्यक्त्वस्य पुनस्तं बन्धेन न व्यवलीयते कदाचित्३३॥

भिन्नेऽपूर्वकरणेन विदारिते तस्मिन् ग्रन्थावात्मनि लाभः प्राप्तिर्जायते संपद्यते परमपदहेतोर्मोक्षकारणस्य नियमान्नियमेनावश्यंभावतयेत्यर्थः कस्य सम्यक्त्वस्य वक्ष्यमाणस्वरूपस्य। पुनस्तं ग्रन्थिमवाप्तसम्यग्दर्शनः सन् बन्धेन कर्मबन्धेन न व्यवलीयते नातिक्रामयति कदाचित्कस्मिंश्चित्काले न ह्यसावुत्कृष्टस्थितीनि कर्माणि बध्नाति तथाविधपरिणामाभावादिति ॥ अत्राह

तं जाविह संपत्ती न जुज्जए तस्स निग्गुणत्तणओ।
बहुतरबंधाओ खलु सुत्तविरोहा जओ भणियं॥३४॥

तं यावदिह संप्राप्तिर्न युज्यते तस्य निर्गुणत्वात्।
बहुतरबन्धात्खलु सूत्रविरोधात् यतो भणितम्॥ ३४॥

तं ग्रन्थिं यावदिह विचारे संप्राप्तिर्न युज्यते न घटते। कुतस्तस्य निर्गुणत्वात्तस्य जीवस्य सम्यग्दर्शनादिगुणरहितत्वात्। निर्गुणस्य च बहुतरबन्धात् खलुशब्दोऽवधारणे बहुतरबन्धादेव। इत्थं चैतदङ्गीकर्तव्यं। सूत्रविरोधादन्यथा सूत्रविरोध इत्यर्थः। कथमिति। आह। यतो भणितं परमगुरुभिरिति। किमुक्तमिति। आह

पल्ले महइमहल्ले कुंभं पक्खिवइ सोहए नालिं।
अस्संजए अविरए बहु बंधइ निज्जरे थोवं॥ ३५॥

पल्येऽतिमहामहति कुम्भं प्रक्षिपति शोधयति नालिम्।
असंयतोऽविरतो बहु बध्नाति निर्जरयति स्तोकं॥३५॥

पल्यवत्न्यस्तस्मिन् पल्ये महति महल्ले अतिशयमहति कुम्भं लाटदेशप्रसिद्धमानरूपं धान्यस्येति गम्यते प्रक्षिपति स्थापयति शोधयति नालिं गृह्णाति सेतिकाम्। एष दृष्टान्तो ऽयमर्थोपनयः। यो ऽसंयतः सकलसम्यक्त्वादिगुणस्थानेष्वसंयतत्वान्मिथ्यादृष्टिः परिगृह्यते अविरतः प्राणवधादेरनिवृत्तो बहु बध्नाति निर्जरयति स्तोकं स्तोकतरं क्षपयति निर्गुणत्वात्। गुणनिबन्धना हि विशिष्टनिर्जरेति॥

पल्ले महइमहल्ले कुंभं सोहेइ पक्खिवे नालिं॥
जे संजए पमत्ते बहु निज्जरे बंधए थोवं॥ ३६॥

पल्लेऽतिशयमहति कुम्भं सोधयति प्रक्षिपति नाल्पम्।
यः संयतः प्रमत्तो बहु निर्जरयति बध्नाति स्तोकम्॥३६॥

पल्ले अतिशयमहति कुम्भं सोधयति प्रक्षिपति नाल्पं । एष दृष्टान्तो ऽयमर्थोपनयः । यः संयतः सम्यग्दृष्टिरपिप्रमादवान् प्रमत्तसंयत एव नान्ये बहु निर्जरयति बध्नाति स्तोकं सगुणत्वादिति ॥

पल्ले महइमहल्ले कुंभं सोहेइ पक्खिवइ न किंचि ॥
जे संजए अपमत्ते बहु निज्जर बंधइ न किंचि ॥३७॥

पल्लेऽतिशयमहति कुम्भं सोधयति प्रक्षिपति न किंचित्
यः संयतोऽप्रमत्तो बहु निर्जरयति बध्नाति न किंचित्३७

पल्ले ऽतिशयमहति कुम्भं सोधयति प्रक्षिपति न किंचित् । एष दृष्टान्तो ऽयमर्थोपनयः । यः संयतो ऽप्रमत्तः प्रमादरहितः साधुरित्यर्थः बहु निर्जरयति बध्नाति न किंचिद्विशिष्टतरगुणत्वात् बन्धकारणाभावादिति । गुरुराह ॥

एयमिह ओहविसयं भणियं सव्वे न एवमेवंति ॥
अस्संजओ उ एवं पडुच्च ओसन्नभावं तु ॥ ३८ ॥

एतदिह ओघविषयं भणितं सर्वे न एवमेवेति ।
असंयतस्त्वेवं प्रतीत्य ओसन्नभावं तु ॥ ३८ ॥

एतदिति पल्ले महइमहल्ले इत्यादि इहास्मिन्विचारे ओघविषयं सामान्यविषयं भणितमुक्तं । सर्वे न एवमेवेति सर्वे नैवमेव बध्न-

न्ति । अस्यैव विषयमुपदर्शयति । असंयतस्त्वेवं मिथ्यादृष्टिरेव एवं प्राप्नोति नान्य इति । अमायपि प्रतीत्याङ्गीकृत्य ओसन्नभावं बाहुल्यभावं तुरवधारणे ओसन्नभावमेव न तु नियममिति । नियमे दोषमाह ॥

पावइ बंधाभावो उ अन्नहा पोग्गलाणभावाओ ।
इय वुड्डिगहणओ ते सवे जीवेहि जुज्जंति ॥ ३९ ॥

प्राप्नोति बन्धाभावस्तु अन्यथा पुद्गलानामभावात् ।
इति वृद्धिग्रहणतः ते सर्वे जीवैर्युज्यन्ते ॥ ३९ ॥

प्राप्नोति आपद्यते बन्धाभावस्तु बन्धाभाव एवान्यथान्येन प्रकारेण सर्वे असंयता एवं बध्नन्तीत्येवंलक्षणेन । किमित्यत्रोपपत्तिमाह । पुद्गलानामभावाद्बध्यमानानां कर्मपुद्गलानामसंभवात् । तेषामेवाभावे उपपत्तिमाह । इति वृद्धिग्रहणतः एवमनन्तगुणरूपतया वृद्धिग्रहणेन ते कर्मपुद्गलाः सर्वे जीवैर्युज्यन्ते कालान्तरेण सर्वे जीवैः संबध्यन्ते प्रभूततरग्रहणादल्पतरमोक्षाच्च । सहस्रमिव प्रतिदिवसं पञ्चरूपकग्रहणे एकरूपकमोक्षे च दिवसत्रयान्तः पुरुषशतेनेति । आह चोदकः

मोक्खो ऽसंखिज्जाओ कालोआ ते अ जं जिएहिंतो ॥
भणिया णंतगुणा खलु न एस दोसो तओ जुत्तो ॥४०॥

मोक्षोऽसङ्ख्येयात्कालात् ते च अनंतो जीवेभ्यः ।
भणिता अनन्तगुणाः खलु नैव दोषः ततो युक्तः॥४०॥

मोक्षः परित्यागः असङ्ख्येयात्कालादसङ्ख्येयेन कालेन उत्कृष्टतस्तेषां कर्मपुद्गलानां । तत ऊर्ध्वं कर्मस्थितेः प्रतिषिद्धत्वात् । ते च कर्माणवः यतो यस्माज्जीवेभ्यः सर्वेभ्य एव भणिताः प्रतिपादिता अनन्तगुणाः खलुशब्दस्यावधारणार्थत्वादनन्तगुणा एव । नैष दोषो ऽनन्तरोदितो बन्धाभावप्राप्तिकाललक्षणः ततो युक्तो बहुतरबन्धः प्रभूततरग्रहणेऽल्पतरमोक्षे च सत्यपि तेषामनन्तत्वात् स्तोककालाच्च मोक्षादिति । न हि शीर्षप्रहेलिकान्तस्य राशेः प्रतिदिवसं पञ्चरूपकग्रहणे एकरूपकमोक्षे च सति वर्षशतेनापि पुरुषशतेन योगो भवति प्रभूतत्वात् । एवं दार्ष्टान्तिके भावनीयमिति । इत्थं चोदकेनोक्ते सति गुरुराह ।

गहणमणंताण न किं जायइ समएण ता कहमदोसो॥
आगम संसाराओ न तहा णंताण गहणं तु ॥ ४१ ॥

ग्रहणमनन्तानां न किं जायते समयेन तत्कथमदोषः ।
आगमसंसारान्न तथानन्तानां ग्रहणं तु ॥ ४१ ॥

ग्रहणं कर्मपुद्गलानामादानमनन्तानामत्यन्तप्रभूतानां न किमिति गाथाभङ्गभयाद्व्यत्ययः किं न जायते समयेन, जायत एवेत्यर्थः, समयः परमनिकृष्टः काल उच्यते । यतश्चैवं तत्कथमदोषो दोष एव शीर्षप्रहेलिकान्तस्यापि राशेः प्रतिदिवसं शतभागमात्रग्रहाराशिग्रहणेऽल्पतरमोक्षे च वर्षशतादारत एव पुरुषशतेन योगोपपत्तेः, एवं दार्ष्टान्तिकेऽपि भावना कार्या । स्यादेतदागमसंसारान्न

तथानन्तानां ग्रहणं तु । आगमस्तावत् "जावणं अयं जीवे एयइ वेयइ चलइ फंदइ तावणं अट्ठविहबन्ध एवा सत्तविहबंध एवा छविहबंध एवा एगविहबंध एवा"इत्यादि संसारस्तु प्रतिसमयबन्धकसत्वसंसृतिरूपः प्रतीत एव । एवमागमात्संसाराच्च न तथानन्तानां ग्रहणमेव भवति यथा बध्यमानकर्मपुद्गलाभावाद्बन्धाभाव एवेति । एवं पराभिप्रायमाशङ्क्याह ।

आगम मुक्खाउ ण किं विसेसविसयत्तणेण सुत्तस्स ।
तं जाविह संपत्ती न घडइ तम्हा अदोसो उ ॥ ४२ ॥

आगममोक्षाम्न किं विशेषविषयत्वेन सूत्रस्य ।
तं यावदिह संप्राप्तिर्न घटते तस्माददोषस्तु ॥ ४२ ॥

आगममोक्षात्किं न विशेषविषयत्वेन सूत्रस्य पल्ले इत्यादिलक्षणस्य ( ३५-३७ ) तं ग्रन्थिं यावदिह विचारे संप्राप्तिर्न घटते । द्वौ प्रतिषेधौ प्रकृतमर्थं गमयत इति कृत्वा घटत एव । तस्माददोषस्तु यस्मादेवं तस्मादेष दोष एव न भवति य उक्तस्तं यावदिह संप्राप्तिर्न युज्यते(३४) इत्यादि। तत्रागमस्तावत् "सम्मत्तंमि उ लद्धे" इत्यादि । मोक्षस्तु प्रकृष्टगुणानुष्ठानपूर्वकः प्रसिद्ध एव । अतो यथोक्तविशेषविषयमेव तत्सूत्रमिति इत्थं चैतदङ्गीकर्तव्यं। अन्यथा तदधिकारोक्तमेव "पलिए न किंचि"(३७)इत्येतद्विरुध्यते । अप्रमत्तसंयतस्यापि बन्धकत्वात् । यथोक्तं

"अपमत्तसंजयाणं बंधट्ठिती होइ अट्ठमुहुत्ता ।

१ प्रतिसमयबन्धकर्मकसत्वसंसृतिरूपः

उक्कोसा उ जहन्ना भिन्नमुहुत्तं नु विन्नेया ॥ १ ॥"
इत्यादि तस्मादोघविषयमेवैतदिति ॥
अत्रसितमानुपङ्गिकम् । अधुना प्रकृतं सम्यक्त्वमाह

**संमत्तं पि य तिविहं खओवसमियं तहोवसमियं च ॥**
**खइयं च कारगाइ व पन्नत्तं वीयरागेहिं ॥ ४३ ॥**

सम्यक्त्वमपि च त्रिविधं क्षायोपशमिकं तथौपशमिकम्
क्षायिकं च कारकादि वा प्रज्ञप्तं वीतरागैः ॥ ४३ ॥

सम्यक्शब्दः प्रशंसार्थः अविरोधार्थो वा तद्भावः सम्यक्त्वं प्रशस्तः मोक्षाविरोधी वात्मधर्म इत्यर्थः । अपि तत्रिविधं एतच्चोपाधिभेदात्रिप्रकारं । अपिशब्दाच्छ्रावकधर्मस्य प्रकृतत्वात्तचारित्रमप्योघतोऽणुव्रतगुणव्रतशिक्षापदभेदात्रिविधमेव। चशब्दः स्वगतानेकभेदसमुच्चयार्थः । उक्तं च। "तं च पंचहा सम्मत्तं उवसमं सासायणं खओवसमं वेदयं खइयं"। त्रैविध्यमुपदर्शयति क्षायोपशमिकं तथौपशमिकं क्षायिकं च । कारकादि वा कारकं आदिशब्दाद्रोचकव्यञ्जकपरिग्रहः । एतच्च वक्ष्यत्येवेति न प्रतन्यते । इदं च प्रज्ञप्तं प्ररूपितं वीतरागैरर्हद्भिरिति ॥

सांप्रतं क्षायोपशमिकं सम्यक्त्वमभिधित्सुराह ॥

**मिच्छत्तं जमुदिन्नं तं खीणं अणुइयं च उवसंतं ।**
**मीसीभावपरिणयं वेयिज्जंतं खओवसमं ॥ ४४ ॥**

मिथ्यात्वं यदुदीर्णं तत्क्षीणं अनुदितं चोपशान्तम् ।
मिश्रीभावपरिणतं वेद्यमानं क्षायोपशमिकम् ॥ ४४ ॥

मिथ्यात्वं नाम मिथ्यात्वमोहनीयं कर्म । तत् यदुदीर्णं यदुद्भूतशक्ति उदयावलिकायां व्यवस्थितमित्यर्थः तत्क्षीणं प्रलयमुपगतं अनुदितं च अनुदीर्णं चोपशान्तं । उपशान्तं नाम विष्कम्भितोदयमपनीतमिथ्यात्वस्वभावं च विष्कम्भितोदयं शेषमिथ्यात्वमपनीतमिथ्यात्वस्वभावं मदनकोद्रवोदाहरणत्रिपुञ्जिन्यायशोधितं सम्यक्त्वमेव ॥ आहेह विष्कम्भितोदयस्य मिथ्यात्वस्यानुदीर्णता युक्ता, न पुनः सम्यक्त्वस्य, विपाकेन वेदनात् । उच्यते । सत्यमेतत्, किं त्वपनीतमिथ्यात्वस्वभावत्वात्स्वरूपेणानुदयात्तस्याप्यनुदीर्णोपचार इति ॥ यद्वानुदीर्णत्वं मिथ्यात्वस्यैव युज्यते न तु सम्यक्त्वस्य । कथं । मिथ्यात्वं यदुदीर्णं तत् क्षीणं अनुदीर्णमुपशान्तं चेति । चशब्दस्य व्यवहितप्रयोगः । ततश्चानुदीर्णं मिथ्यात्वमुपशान्तं च सम्यक्त्वं परिगृह्यते । भावार्थः पूर्ववत् ॥ तदेवं मिश्रीभावपरिणतं क्षयोपशमस्वभावमापन्नं वेद्यमानमनुभूयमानं मिथ्यात्वं प्रदेशानुभवेन सम्यक्त्वं विपाकेन क्षयोपशमाभ्यां निवृत्तमिति कृत्वा क्षायोपशमिकं सम्यक्त्वमुच्यते । आहेदं सम्यक्त्वमौदयिको भावः मोहनीयोदयभेदत्वात् अतोऽयुक्तमस्य क्षायोपशमिकत्वं, न अभिप्रायापरिज्ञानात्सम्यक्त्वं हि सांसिद्धिकमात्मपरिणामरूपं ज्ञानवत् न तु क्रोधादिवत् कर्माणुसंपर्कजं तथाहि तावति मिथ्यात्वघनपटले क्षीणे तथानुभवतोऽपि स्वच्छाभ्रकल्पान् सम्यक्त्वपरमाणून् तथाविधसवितृप्रकाशवत् सहज एवासौ तत्परिणाम इति क्षायोपशमनिष्पन्नश्चायं तमन्तरेणाभावात् न

ह्युदीर्णक्षयादनुदीर्णोपशमव्यतिरेकेणास्य भावः क्रोधादिपरिणामः पुनरुपधानसामर्थ्योपादितस्फटिकमणिरक्ततावदसहज इति। आह यदि परिणामः सम्यक्त्वं ततो मिश्रीभावपरिणतं वेद्यमानं क्षायोपशमिकमित्येतद्विरुध्यते मोहनीयभेदयोरेव मिश्रीभावपरिणतयोर्वेद्यमानत्वात्, न विरुध्यते तथाविधपरिणामहेतुत्वेन तयोरेव सम्यक्त्वोपचारात्। कृतं विस्तरेणेति।

क्षायोपशमिकानन्तरमौपशमिकमाह।

उवसमगसेढिगयस्स होइ उवसामियं तु सम्मत्तं।
जो वा अकयतिपुंजो अखवियमिच्छो लहइ सम्मं४५

उपशमकश्रेणिगतस्य भवत्यौपशमिकं तु सम्यक्त्वम्।
यो वा अकृतत्रिपुञ्जोऽक्षपितमिथ्यात्वो लभते सम्यक्त्वम्

उपशमकश्रेणिगतस्य औपशमिकीं श्रेणिमनुप्रविष्टस्य भवत्यौपशमिकमेव सम्यक्त्वं तुरवधारणे अनन्तानुबन्धिनां दर्शनमोहनीयस्य चोपशमेन निर्वृत्तमिति कृत्वा औपशमिकं। यो वा अकृतत्रिपुञ्जस्तथाविधपरिणामोपेतत्वात्सम्यक्मिथ्यात्वोभयानिवर्तितत्रिपुञ्ज एव अक्षपितमिथ्यात्वो ऽक्षीणमिथ्यात्वदर्शनः क्षायिकव्यवच्छेदार्थमेतत् लभते प्राप्नोति सम्यक्त्वं तदप्यौपशमिकमेवेति। अमुमेवार्थं स्पष्टयन्नाह।

खीणंमि उइन्नंमि अ अणुइज्जंते अ सेसमिच्छत्ते॥
अंतोमुहुत्तमित्तं उवसमसम्मं लहइ जीवो॥ ४६॥

क्षीणे उदीर्णे ऽनुदीर्यमाणे च शेषमिथ्यात्वे ।
अन्तर्मुहूर्तमात्रं औपशमिकं सम्यक्त्वं लभते जीवः॥४६

क्षीण एवोदीर्णे अनुभवेनैव भुक्त इत्यर्थः अनुदीर्यमाणे च मन्दपरिणामतया उदयमगच्छति सति कस्मिन् शेषमिथ्यात्वे विष्कम्भितोदय इत्यर्थः अन्तर्मुहूर्तमात्रं कालं तत ऊर्ध्वं नियामकाभावेन नियमेन मिथ्यात्वप्राप्तेरेतावन्तमेव कालमिति किं औपशमिकं सम्यक्त्वं लभते जीव इति ॥

इदमेव दृष्टान्तेन स्पष्टतरमभिधित्सुराह ॥

ऊसरदेसं दड्ढिल्लयं व विज्झाइ वणदवो पप्प ॥
इय मिच्छस्साणुदए उवसमसम्मं लहइ जीवो ॥४७॥

ऊषरदेशं दग्धं वा विध्यायति वनदवः प्राप्य ।
इय मिथ्यात्वस्यानुदये औपशमिकं सम्यक्त्वं लभते जीवः

ऊषरदेशं ऊषरविभागं ऊषरं नाम यत्र तृणादेरसंभवः दग्धं वा पूर्वमेवाग्निना विध्यायति वनदवो दावानलः प्राप्य। कुतस्तत्र दाह्याभावात् । एष दृष्टान्तोऽयमर्थोपनयः । इय एवं तथाविधपरिणामान्मिथ्यात्वस्यानुदये सति औपशमिकं सम्यक्त्वं लभते जीव इति । वनदवकल्पं ह्यत्र मिथ्यात्वं ऊषरादिदेशस्थानीयं तथाविधपरिणामकण्डकमिति ॥ आह क्षायोपशमिकादस्य को विशेष इति । उच्यते । तत्रोपशान्तस्यापि मिथ्यात्वस्य प्रदेशानुभवोऽस्ति न त्वौपशमिके । अन्ये तु व्याचक्षते । श्रेणिमध्यवर्तिन्येवौपशमि-

के प्रदेशानुभवो नास्ति न तु द्वितीये तथापि तत्र सम्यक्त्वाण्वनुभवाभाव एव विशेष इति।

औपशमिकानन्तरं क्षायिकमाह॥

खीणे दंसणमोहे तिविहंमि वि भवनियाणभूयंमि।
निप्पच्चवायमउलं सम्मत्तं खाइयं होइ ॥ ४८ ॥

क्षीणे दर्शनमोहनीये त्रिविधेऽपि भवनिदानभूते।
निःप्रत्यपायमतुलं सम्यक्त्वं क्षायिकं भवति ॥ ४८ ॥

क्षपकश्रेणिमनुप्रविष्टस्य सतः क्षीणे दर्शनमोहनीये एकान्तेनैव प्रलयमुपगते त्रिविधेऽपि मिथ्यात्वसम्यग्मिथ्यात्वसम्यक्त्वभेदभिन्ने किं विशिष्टे भवनिदानभूते भवन्त्यस्मिन् कर्मवशवर्तिनः प्राणिन इति भवः संसारस्तत्कारणभूते निःप्रत्यपायं अतिचारापायरहितं अतुलमनन्यसदृशं आसन्नतया मोक्षकारणत्वात् सम्यक्त्वं प्राङ्निरूपितशब्दार्थं क्षायिकं भवति मिथ्यात्वक्षयनिबन्धनत्वात् इति।

क्षायिकानन्तरं कारकायाह॥

जं जह भणियं तं तह करेइ सइ जंमि कारगं तं तु।
रोयगसम्मत्तं पुण रुइमित्तकरं मुणेयव्वं ॥ ४९ ॥

यद्यथा भणितं तत्तथा करोति सति यस्मिन् कारकं तत्तु।
रोचकसम्यक्त्वं पुनः रुचिमात्रकरं मुणितव्यं ॥ ४९ ॥

यद्यथा भणितं सूत्रेऽनुष्ठानं तत्तथा करोति सति यस्मिन्सम्यग्दर्शने परमशुद्धिरूपे कारकं तत्तु। कारयतीति कारकं॥ रो-

१ निर्कर्तनत्वा निर्कर्त्तत्वात्।

चकसम्यक्त्वं पुनः रुचिमात्रकरं मुणितव्यं विहितानुष्ठाने तथाविधशुद्ध्यभावात्, रोचयतीति रोचकं॥

सयमिह मिच्छद्दिट्ठी धम्मकहाईहि दीवइ परस्स।
सम्मत्तमिणं दीवग कारणफलभावओ नेयं॥ ५०॥

[स्वयमिह मिथ्यादृष्टिः धर्मकथादिभिर्दीपयति परस्य।
सम्यक्त्वमिदं दीपकं कारणफलभावतो ज्ञेयं॥५०॥]

स्वयमिह मिथ्यादृष्टिरभव्यो भव्यो वा कश्चिदङ्गारमर्दकवत्। अथ च धर्मकथादिभिर्धर्मकथया मातृस्थानानुष्ठानेनातिशयेन वा केनचिद्दीपयतीति प्रकाशयति परस्य श्रोतुः सम्यक्त्वमिदं व्यञ्जकं। आह मिथ्यादृष्टेः सम्यक्त्वमिति विरोधः सत्यं किन्तु कारणफलभावतो ज्ञेयं तस्य हि मिथ्यादृष्टेरपि यः परिणामः स खलु प्रतिपन्नृसम्यक्त्वस्य कारणभावं प्रतिपद्यते तद्भावभावित्वात्तस्य, अतः कारणे एव कार्योपचारात्सम्यक्त्वाविरोधः यथायुर्घृतमिति॥
समस्तस्यैव भावार्थमुपदर्शयति॥

तव्विहखओवसमओ तेसिमणूणं अभावओ चेव।
एवं विचित्तरूवं सनिबंधणमो मुणेयव्वं॥ ५१॥

[तद्विधक्षयोपशमतस्तेषामणूनां अभावतश्चैव।
एवं विचित्ररूपं सनिबन्धनमेव मुणितव्यं॥ ५१॥]

तद्विधक्षयोपशमतस्तेषामणूनां मिथ्यात्वा नामित्यर्थः अभावतश्चैव तेषामेवेति वर्त्तते एवं विचित्ररूपं क्षायोपशमिकादिभेदेनेति

भावः। सनिबन्धनमेव सकारणं मुणितव्यं। तथाहि त एव मिथ्यात्वपरमाणवस्तथाविधात्मपरिणामेन क्वचित्तथा शुद्धिमापद्यंते यथा क्षायोपशमिकं सम्यक्त्वं भवति तत्रापि क्वचित्सातिचारं कालापेक्षया क्वचिन्निरतिचारं, अपरे तथा यथौपशमिकं, क्षयादेव क्षायिकमिति ॥

अपरेऽप्यस्य भेदाः संभवन्तीति कृत्वा तानपि सूचयन्नाह॥

**किं चेहुवाहिभेया दसहावीमं परूवियं समए।**
**ओहेण तंपिमेसिं भेयाणमभिन्नरूवं तु ॥ ५२ ॥**

[ किं चेहोपाधिभेदात् दशधापीदं प्ररूपितं समये।
ओघेन तदपि अमीषां भेदानामभिन्नरूपं तु ॥ ५२ ॥ ]

किं चेहोपाधिभेदादाज्ञादिविशेषणभेदादित्यर्थः दशधापीदं दशप्रकारमप्येतत्सम्यक्त्वं प्ररूपितं समये आगमे। यथोक्तं प्रज्ञापनायां

> निसग्गुवएसरुई आणरुई सुत्तवीयरुइमेव।
> अभिगमवित्थाररुई किरियासंखेवधम्मरुई ॥ १ ॥

आह तदेवेह कस्मान्नोक्तमिति उच्यते ओघेन सामान्येन तदपि दशप्रकारममीषां भेदानां क्षायोपशमिकादीनामभिन्नरूपमेव एतेषामेव केनचिद्देदेन भेदात्। संक्षेपारम्भश्चायं अतो न तेषामभिधानमिति ॥

इदं च सम्यक्त्वमात्मपरिणामरूपत्वाच्छद्मस्थेन दुर्लक्ष्यमिति लक्षणमाह।

उपयुक्तोऽन्तःकरणेन समाहितो, गुरुमूले आचार्यसन्निधौ, संविग्नो मोक्षसुखाभिलाषी न तु रिद्धिकाम इत्वरं चातुर्मासादिकालावधिना, इतरद्वा यावत्कथिकमेव, प्राणवधं वर्जयतीति वर्तते, एवं वर्जयित्वानुदिवसमनुस्मरन्, स्मृतिमूलो धर्म इति कृत्वा, पालयति विशुद्धपरिणामः, न पुनस्तत्र चेतसापि प्रवर्तत इति ॥

अत्राह

देसविरइपरिणामे सइ किं गुरुणा फलस्स भावाओ।
उभयपलिमंथदोसो निरत्थओ मोहलिंगं तु॥१०९॥

[देशविरतिपरिणामे सति किं गुरुणा फलस्याभावात्।
उभयपलिमन्थदोषः निरर्थको मोहलिंगं तु ॥ १०९ ॥]

इह श्रावको यदाणुव्रतं प्रतिपद्यते तदास्य देशविरतिपरिणामः स्याद्वा न वा किं चात उभयथापि दोषः तमेवाह देशविरतिपरिणामे सति, स्वत एव तथाविधाणुव्रतरूपाध्यवसाये सति, किं गुरुणा, किमाचार्येण यत्संनिधौ तद्गृह्यते कुतः फलस्याभावात्तत्संनिधावपि प्रतिपत्तुः स एव फललाभः स च स्वत एव संजात इत्यफला गुरुमार्गणा किं च उभयपलिमन्थदोषः तथाविधाणुव्रतरूपाध्यवसाये सत्येव गुरुसंनिधौ तत्प्रतिपत्त्यभ्युपगमे उभयोराचार्यशिष्ययोर्मुधाव्यापारदोषः स च निरर्थको मोहलिंग एव न हि अमूढस्य प्रयोजनमन्तरेण प्रवृत्तिरिति ॥ द्वितीयं विकल्पमुररीकृत्याह ।

१ कालं विधिना

दुन्हवि य मुसावाओ तयभावे पालणस्स वि अभावो।
न य परिणामेण विणा इच्छिज्जइ पालणं समए११०

[ द्वयोरपि मृषावादः तदभावे पालनस्याप्यभावः।
न च परिणामेन विना इष्यते पालनं समये ॥ ११० ॥]

यदि न देशविरतिपरिणाम एव तर्हि द्वयोरपि प्रतिपत्तृप्रतिपादकयोः शिष्याचार्ययोः मृषावादः शिष्यस्यासदभ्युपगमाद्गुरोश्चासदभिधानादिति किं च तदभावे देशविरतिपरिणामस्याभावे पालनस्यापि व्रतसंरक्षणस्याप्यभावः एतदेव स्पष्टयति न च नैव परिणामेनानन्तरोदितेन विना इष्यतेऽभ्युपगम्यते पालनं संरक्षणं, व्रतस्येति प्रक्रमाद्गम्यते, समये सिद्धान्ते, परमार्थेन तस्यैव व्रतत्वादिति। एवं पराभिप्रायमाशङ्क्य, पक्षद्वयेऽप्यदोष इत्यावेदयन्नाह

संते विय परिणामे गुरुमूलपवज्जणंमि एस गुणो।
दढया आणाकरणं कम्मखओवसमवुड्ढी य॥१११॥

[ सत्यपि च परिणामे गुरुमूलप्रतिपादने एष गुणः।
दृढता आज्ञाकरणं कर्मक्षयोपशमवृद्धिश्च ॥ १११ ॥ ]

सत्यपि च परिणामे देशविरतिरूपे, गुरुमूलप्रतिपादने आचार्यसन्निधौ प्रतिपत्तिकरणे, एष गुण एषोऽभ्युदयः, यदुत दृढता तस्मिन्नेव गुणे दार्ढ्यं, तथाज्ञाकरणं अर्हदाज्ञासंपादनं, यतस्तस्यैव उपदेशो गुरुसन्निधौ व्रतग्रहणं कार्यमिति, तथा कर्मक्षयोपशमवृद्धिश्च तथाकरणे दार्ढ्याज्ञासंपादनशुभपरिणामतः अधिकतरक्षयोपशमोपपत्तेरिति ॥

इय अहिए फलभावे न होइ उभयपलिमंथदोसो उ।
तयभावम्मि वि दुन्हवि न मुसावाओवि गुणभावा॥१२
[ इय अधिके फलभावे न भवति उभयपलिमन्थदोषः।
तदभावेऽपि द्वयोरपि न मृषावादोऽपि गुणभावात्॥१२]

इय एवमधिके फलभावे पूर्वावस्थातः अभ्यधिकतरायां फलसत्तायां, न भवति न जायते, उभयपलिमन्थदोषः शिष्याचार्ययोर्मुधाव्यापारदोष इत्यर्थः। एवं परिहृतः प्रथमो विकल्पः ॥ द्वितीयमधिकृत्याह। तदभावेऽपि देशविरतिपरिणामाभावेऽपि, द्वयोरपि प्रत्याख्यातृप्रत्याख्यापयित्रोर्गुरुशिष्ययोर्न मृषावादोऽपि प्राक्चोदितः कुतो गुणभावाद्गुणसंभवादिति। गुणभावमेवाह ॥

तग्गहणउ चिय तओ जायइ कालेण असढभावस्स।
इयरस्स न देयं चिय सुद्धो छलिओ वि जइ असढो॥१३
[ तद्ग्रहणत एव तको जायते कालेनाशठभावस्य।
इतरस्य न देयमेव शुद्धः छलितोऽपि यतिरशठः॥१३]

तद्ग्रहणत एव विधिना गुरुसन्निधौ व्रतग्रहणादेव तको जायते कालेन असौ देशविरतिपरिणामो भवति कालेन तत् गुरुसन्निधिकारणत्वादित्यर्थः।[1] किंविशिष्टस्य अशठभावस्य श्राद्धस्य सत्त्वस्य शठविषयं दोषमाशङ्क्याह, इतरस्य शठस्य न देयमेव, व्रतं अस्थानदाने भगवदाशातनाप्रसङ्गात्, तदज्ञानविषयं दोषमाशङ्क्याह, शुद्धः छलितोऽपि यतिरशठः छद्मस्थप्रत्यपेक्षणया कृतयत्नो,

---

१ तत्कारणत्वादित्यर्थं

मायाविना कथंचिद्ध्वंसितोऽपि विप्रतारितोऽप्यार्जवः साधुरदोषवानेव, आज्ञानतिक्रमादिति ॥

अपरस्त्वाह ।

थूलगपाणाइवायं पच्चक्खंतस्स कह न इयरंमि ।
होइ णुमइ जइस्स वि तिविहेण तिदंडविरयस्स११४

[ स्थूरकप्राणातिपातं प्रत्याचक्षाणस्य कथं नेतरस्मिन् ।
भवत्यनुमतिर्यतेः त्रिविधेन त्रिदण्डाविरतस्य ॥११४॥ ]

स्थूरकप्राणातिपातं द्वीन्द्रियादिप्राणजिघांसनं प्रत्याचक्षाणस्य तद्विषयां निवृत्तिं कारयतः कथं नेतरस्मिन् कथं न सूक्ष्मप्राणातिपाते भवत्यनुमतिर्यतेर्भवत्येवेत्यभिप्रायः, किंविशिष्टस्य यतेस्त्रिविधेन त्रिदण्डविरतस्य मनसा वाचा कायेन सावद्यं प्रति कृतकारितानुमतिविरतस्य, तथा चान्यत्रापि निषिद्ध एव यतेरेवं जातीयोऽर्थः, यत उक्तं "माणुमती केरिमा तुम्हे"त्ति ॥ अत्र गुरुराह

अविहीए होइ चिय विहीइ नो सुयविसुद्धभावस्स ।
गाहावइसुअचोरग्गहणमोअणा इत्य नायं तु॥११५॥

[ अविधिना भवत्येव विधिना न श्रुतविशुद्धभावस्य ।
गृहपतिसुतचोरग्रहणमोचनं अत्र ज्ञातं तु ॥ ११५ ॥ ]

अविधिना भवत्येव अणुव्रतग्रहणकाले सम्यगनाख्याय संसारासारतास्थापनपुरःसरं साधुधर्मं प्रमादतोऽणुव्रतानि यच्छतो भवत्येवानुमतिः, विधिना पुनः साधुधर्मकथनपुरःसरेण नेति न भव-

त्यनुमतिः, किंविशिष्टस्य श्रुतविशुद्धभावस्य तत्वज्ञानान्मध्यस्थस्येत्यर्थः, अस्मिन्नेवार्थे दृष्टान्तमाह, गृहपतिसुतचोरग्रहणमोचना अत्र ज्ञातमिह उदाहरणमित्यर्थः, तच्चेदं

वंसतउरं नगरं, जियसत्तू राया धारिणी देवी दणट्ठा तिसएण परितुट्ठो से भत्ता, भणिया य णेण, भण किं ते पियं कीरउ, तीए भणियं, कोमुदीए अंतेउराणं जहिच्छा पयारेण निसि ऊस्सयपसाउत्ति। पडिसुयमणेणं। समागओ सो दियहो। काराविय च अणेण घोसणं, जहा जो एत्थ अज्ज पुरिसो वसिही तस्स मए सारीरो णिग्गहो कायव्वो, उग्गदंडो य रायत्ति। ततो णिग्गया सव्वे पुरिसा णवरमेगस्स सेट्ठिणो छ पुत्ता संववहारवावडयाए लहु, ण णिग्गया। ढक्किया पओलिओ। भएण तत्थेव, खुसिया, वत्तो रयणीऊसवो। बीयदिवहे य पउत्ता चारिया गवेसह को ण णिग्गउत्ति। तेहिं निउणबुद्धीए गवेसिऊण साहियं रन्नो, अमुगसेट्टिस्स छसुया ण णिग्गयत्ति। कुविओ राया भणियं घाणेणं वावाएह ते दुरायारे। गहियो ते रायपुरिसेहिं। एयं वायं णिऊण णरवईसमीवं समागओ तेसिं पिया। विन्नतो य णेण राया देव खमसु एगमवराहं, मुयह एकवारं मम एए। मा अन्नो वि एवं काहित्ति ण मुयई राया। पुणो पुणो भन्नमाणेण मा कुलक्खओ भवउत्ति मुक्को से जेट्ठपुत्तो, वावाइया इयरे। ण य समभायस्स सव्वपुत्तेसु सेट्ठिस्स सेसवावायणेसु अणुमई त्ति ॥ एस दिट्ठंतो इमो पयस्स उवणओ। रायातुल्लो सावगो, वावाइज्जमाणवणियतुल्ला जीवणिकाया, पियतुल्लो साहू, विन्नवणतुल्ला अ-

णुव्वयगहणकाले साधुधम्मदेसणा । एवं च असुयणे वि सावगस्स ण साधुस्स दोसो ॥

न चैतत्स्वमनीषिकया परिकल्पितं उक्तं च सूत्रकृताङ्गे "गाहावइसुयचोरग्गहणविमोक्खणयाएत्ति" एतत्संग्राहकं चेदं गाथात्रयम् ॥

देवीतुट्ठो राया ओरोहस्स निसि ऊसवपसाओ।
घोसण नरनिग्गमणं छव्वणियसुयाणनिखेवो॥११६॥

[ देव्यै तुष्टो राजा अन्तःपुरस्य निशि उत्सवप्रसादः।
घोषणनरनिर्गमनं षड्वणिक्सुतानामनिक्षेपः ॥११६॥ ]

चारियकहिए वज्झा मोएइ पिया न मिल्लइ राया।
जिट्ठमुयणे समस्सउ नाणुमई तस्स सेसेसु॥११७॥

[ चारिककथिते वध्या मोचयति पिता न मुञ्चति राजा।
ज्येष्ठमोचने समस्य तु नानुमतिः तस्य शेषेषु॥ ११७ ॥]

राया सड्ढो वणिया काया साहू य तेसि पियतुल्लो।
मोयइ अविसेसेणं न मुयइ सो तस्स किं इत्थ११८

[ राजा श्राद्धः वणिक्पुत्राः कायाःसाधुश्च तेषां पितृतुल्यः
मोचयति अविशेषेण न मुञ्चति स, तस्य किमत्र॥११८॥]

एतत्प्रतार्थमिति न व्याख्यायते णवरमोरोहो अंतेउरं भण्णइ ॥

सांप्रतमन्यप्रवादस्थानकं

तसपाणघायविरई तत्तो थावरगयाण वहभावा।
नागरगवहनिवित्तीनायाओ केइ नेच्छंति॥११९॥

[ त्रसप्राणघातविरतिं ततः स्थावरगतानां वधभावात्।
नागरकवधनिवृत्तिज्ञाततो केचन नेच्छन्ति ॥ ११९ ॥ ]

त्रसप्राणघातविरतिं द्वीन्द्रियादिप्राणव्यापत्तिनिवृत्तिं ततस्तस्मात्त्रसकायात् स्थावरगतानां पृथिव्यादिसमुत्पन्नानां वधभावाद्व्यापत्तिसंभवान्नागरकवधनिवृत्तिज्ञाततो नागरकवधनिवृत्त्युदाहरणेनकेचन वादिनो नेच्छन्ति नाभ्युपगच्छन्तीति गाथाक्षरार्थः,भावार्थत्वाह॥

पच्चक्खायंमि इहं नागरगवहम्मि निग्गयं पि तओ।
तं वहमाणस्स न किं जायइ वहविरइभंगो उ॥१२०॥

[ प्रत्याख्याते इह नागरकवधे निर्गतमपि ततः ।
तं घ्नतो न किं जायते वधविरतिभङ्गः ॥ १२० ॥ ]

प्रत्याख्याते इह परित्यक्ते अत्र कस्मिन्नागरकजिघांसने निर्गतमपि निःक्रान्तमपि ततो नगरात् तं नागरकं घ्नतो व्यापादयतोऽन्यत्रापि न किं जायते वधविरतिभङ्गः प्रत्याख्यानभङ्गो जायत एवेति। इत्थं दृष्टान्तमभिधाय अधुना दार्ष्टान्तिकयोजनां कुर्वन्नाह॥

इय अविसेसा तसपाणघायविरइं काउ तं तत्तो ।
थावरकायमणुगयं वहमाणस्स धुवो भंगो ॥१२१॥

[ इय अविशेषात् त्रसप्राणघातविरतिं कृत्वा तं ततः ।
स्थावरकायमनुगतं घ्नतो ध्रुवो भङ्गः ॥ १२१ ॥ ]

इय एवमविशेषात्सामान्येनैव त्रसप्राणघातविरतिमपि कृत्वा

१ प्राणातिपात०

तं त्रसं ततस्त्रसकायात् द्वीन्द्रियादिलक्षणात् स्थावरकायमनुगतं विचित्रकर्मपरिणामात्पश्चात्पृथिव्यादिपूत्पन्नं प्रतो व्यापादयतो भ्रुवो भङ्गोऽवश्यमेव भङ्गो निवृत्तेरिति । संभवति चैतद्यत्त्रसोऽपि मृत्वा श्रावकारम्भविषये स्थावरः प्रत्यागच्छति स च तं व्यापादयतीति ततश्च विशेष्यप्रत्याख्यानं कर्तव्यमनवद्यत्वादिति। आह च

तसभूयपाणविरई तब्भावंमि वि न होइ भंगाय ।
खीरविगइपच्चखाणे दहियपरिभोगकिरिय व्व १२२

[ त्रसभूतप्राणविरतिः तद्भावे ऽपि न भवति भङ्गाय ।
क्षीरविकृतिप्रत्याख्यातृदधिपरिभोगक्रियावत् ॥१२२॥]

त्रसभूतप्राणविरतिस्त्रसपर्यायाध्यासितप्राणवधनिवृत्तिः तद्भावेऽपि स्थावरगतव्यापत्तिभावेऽपि न भवति प्रत्याख्यानभङ्गाय विशेष्यकृतत्वात् किंवत् क्षीरविकृतिप्रत्याख्यातृदधिपरिभोगक्रियावत् न हि क्षीरविकृतिप्रत्याख्यातुर्दधिपरिभोगक्रिया प्रत्याख्यानभङ्गाय क्षीरस्यैव दधिरूपत्वापत्तावपि विशेष्यप्रत्याख्यानादिति[1] ॥ उपसंहरन्नाह ॥

तम्हा विसेसिऊणं इय विरई इत्थ होइ कायव्वा ।
अब्भक्खाणं दुन्ह वि इय करणे नावगच्छंति॥१२३॥

[ तस्माद्विशिष्य इय विरतिरत्र भवति कर्तव्या ।
अभ्याख्यानं द्वयोरपि इयकरणे नावगच्छन्ति॥१२३॥ ]

यस्मादेवं तस्माद्विशिष्य भूतशब्दोपादानेन इय एवं विरति-

१ प्रत्याख्यानत्वादिति

निवृत्तिरत्र प्राणातिपाते भवति कर्तव्या अन्यथा भङ्गप्रसङ्गात् । इति पूर्वपक्षः । अत्रोत्तरमाह । अभ्याख्यानं तद्गुणशून्यत्वेऽपि तद्गुणाभ्युपगमलक्षणं द्वयोरपि प्रत्याख्यातृप्रत्याख्यापयित्रोराचार्यश्रावकयोः इयकरणे भूतशब्दसमन्वितप्रत्याख्यानासेवने नावगच्छन्ति नावबुध्यन्ते पूर्वपक्षवादिन इति ॥ तथा चाह ॥

ओवंमे तादत्थे व हुज्ज एसित्थ भूयसद्दो त्ति ।
उभओ पओगकरणं न संगयं समयनीईए ॥१२४॥

[ औपम्ये तादर्थ्ये वा भवेदेषो ऽत्र भूतशब्द इति ।
उभयथा प्रयोगकरणं न संगतं समयनीत्या ॥ १२४ ॥]

औपम्ये तादर्थ्ये वा भवेदेषोऽत्र प्रत्याख्यानविधौ भूतशब्द इति । उभयथापि प्रयोगकरणमस्य न संगतं समयनीत्या सिद्धान्तव्यवस्थयेति गाथाक्षरार्थः ॥ भावार्थमाह ।

ओवंमे देसो खलु एसो सुरलोयभूय मो एत्थ ।
देसु च्चिय सुरलोगो न होइ एवं तसा तेपि ॥१२५॥

[ औपम्ये देशः खल्वेष सुरलोकभूत एव अत्र ।
देश एव सुरलोको न भवति एवं समासेऽपि ॥१२५॥]

औपम्ये उपमाभावे भूतशब्दप्रयोगो यथा देशः खल्वेष लाटदेशादिः ऋध्यादिगुणोपेतत्वात्सुरलोकोपमः मो इत्यवधारणार्थो निपातः सुरलोकभूत एव अथास्मिन् पक्षे देश एव सुरलोको न

१ अत्र स्थितेऽपि

भवति गोत्वोपनीयमानत्वादेतस्य एवं प्रमाणे ऽपि यद्विषया नि-वृत्तिः क्रियते ते ऽपि त्रसा न भवन्ति त्रसभूतत्वान्नगोत्वमीयमा-नत्वादिति । ततः किमित्याह ॥

अतसवहनिवित्तीए थावरघाए वि पावए तस्स ।
वहविरइभंगदोसो अतसत्ता थावराणं तु ॥ १२६ ॥

[ अत्रसवधनिवृत्तौ स्थावरघाते ऽपि प्राप्नोति तस्य ।
वधविरतिभङ्गदोषो ऽत्रसत्वात्स्थावराणां तु ॥१२६॥ ]

एतस्मात्त्रसवधनिवृत्तौ सत्यां स्थावरवधे ऽपि कृते प्राप्नोति तस्य निवृत्तिमतुर्वधविरतिभङ्गदोषः पुनः अत्रसत्वात्स्थावराणामेव अत्र साध्ये त्रसभूता भवन्तीति अवसितः औपम्यपक्षः । सांप्रतं तादर्थ्यपक्षमाह ।

तादत्थे पुण एसो सीईभूयमुदगंति निद्दिट्ठो ।
तज्जाइअणुच्छेया न य सो तसथावराणं तु ॥१२७॥

[ तादर्थ्ये पुनरेष शीतीभूतमुदकमिति निर्दिष्टः ।
तज्जात्यनुच्छेदात् न चासौ त्रसस्थावरयोस्तु ॥१२७॥ ]

तादर्थ्ये पुनस्तदर्थभावे पुनरेष भूतशब्दप्रयोगः शीतीभूतमुदकमुष्णं सत्पर्यायान्तरमापन्नमिति निर्दिष्टस्तल्लक्षणज्ञैः एवं प्रतिपादितः तज्जात्यनुच्छेदात् अत्रापि तदुदकजात्यनुच्छेदेनैवोष्णं सच्छीतीभूतं न चासौ जात्यनुच्छेदस्त्रसस्थावरयोर्भिन्नजातित्वादिति ॥

.सिय जीवजाइमहिगिच्च अत्थि किं तीइ अपडिकुट्ठाए।
भूअग्गहणेवि एवं दोसो अणिवारणिज्जो ओ ॥१२८॥
[ स्याज्जीवजातिमधिकृत्यास्ति किं तया अप्रतिकुष्टया ।
भूतग्रहणे ऽप्येवं दोषो ऽनिवारणीय एव ॥ १२८ ॥ ]

स्याज्जीवजातिमधिकृत्यास्ति जात्यनुच्छेदः द्वयोरपि जीवत्वानुच्छेदादित्याशङ्क्याह किं तया जीवजात्या अप्रतिकुष्टया अनिषिद्धया न तेन जीवजातिवधविरतिः कृता येन सा चिन्त्यते ततश्च भूतग्रहणेऽप्येवमुक्तन्यायात् दोषोऽनिवारणीय एवेति, किं च॥

तसभूयावि तसच्चिय जं ता किं भूयसद्दगहणेणं ।
तब्भावओ अ सिद्धे हंत विसेसत्थभावम्मि ॥१२९॥
[ त्रसभूता अपि त्रसा एव यत्तत्किं भूतशब्दग्रहणेन ।
तद्भावत एव सिद्धे हंत विशेषार्थभावे ॥ १२९ ॥ ]

त्रसभूता अपि वस्तुस्थित्या त्रसा एव नान्ये यद्यस्मादेवं तत्तस्मात्किं भूतशब्दग्रहणेन न किंचिदित्यर्थः,तद्भावत एव त्रसभावत एव सिद्धे हन्त विशेषार्थभावे त्रसपर्यायलक्षणे, न हि त्रसपर्यायशून्यस्य त्रसत्वमिति ॥ किं च ।

थावरसंभारकडेण कम्मणा जं च थावरा भणिया।
इयरेणं तु तसा खलु इत्तो चिय तेसि भेओउ॥१३०॥
[ स्थावरसंभारकृतेन कर्मणा यच्च स्थावरा भणिताः ।
इतरेण तु त्रसाः खलु अत एव तयोर्भेदः ॥ १३० ॥ ]

स्थावरसंभारकृतेन पृथिव्यादिनिचयनिर्वर्तितेन कर्मणा यच्च यस्माच्च स्थावरा भणिताः परममुनिभिरिति गम्यते इतरेण तु त्रस-संभारकृतेन तुरवधारणे त्रससंभारकृतेनैव त्रसाः खल्विति त्रसा एव खलुशब्दस्यावधारणार्थत्वात् अत एवास्मादेव निमित्तभेदात्तयो-स्त्रसस्थावरयोर्भेदः, तस्मिन्सति अनर्थको भूतशब्द इति ।

इदानीं दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमाह ॥

नागरगंमि वि गामाइसंकमे अवगयंमि तब्भावे ।
नत्थि हु वहे वि भंगो अणवगए किमिह गामेण१३१

[ नागरकेऽपि ग्रामादिसंक्रमे अपगते तद्भावे ।
नास्त्येव वधेऽपि भङ्गोऽनपगते किमिह ग्रामेण ॥१३१॥]

नागरकेऽपि दृष्टान्ततयोपन्यस्त इदं चिन्त्यते । ग्रामादिसंक्रमे तस्य किमसौ नागरकभावोऽपैति वा न वा । यद्यपैति ततो ग्रामादिसंक्रमे सति, अपगते तद्भावे नागरकभावे नास्त्येव वधेऽपि भङ्गः प्रत्याख्यानस्य तथाभिसन्धेः । अथ नापैत्यत्राह । अनपगते आपुरुषमभिसन्धिना अनिवृत्ते नागरकभावे किमिह ग्रामेण तत्रापि वधविरतिविषयस्तथापुरुषभावानिवृत्तेरिति ॥

न य सइ तसभावंमि थावरकायगयं तु सो वहइ ।
तम्हा अणायमेयं मुद्धमइविलोहणं नेयं ॥ १३२ ॥

[ न च सति त्रसभावे स्थावरकायगतमसौ हन्ति ।
तस्मादज्ञातमेतत् मुग्धमतिविलोभनं ज्ञेयं ॥ १३२ ॥ ]

न च सति त्रसभावे नैव विद्यमान एव त्रसत्वे स्थावरकायग-

तमर्मी हन्ति अपरित्यक्ते त्रसत्वे स्थावरकायगमनाभावात् तस्मादज्ञातमेतत् उक्तन्यायादनुदाहरणमेतत् मुग्धमतिविलोभनं ज्ञेयं ऋजुमतिविस्मयकरं ज्ञातव्यमिति ॥

इदानीं अन्यद्वादस्थानकम् ।

अन्ने उ दुहियसत्ता संसारं परिअडंति पावेण ।
वावाएयव्वा खलु ते तक्खवणट्ठया विंति ॥ १३३ ॥

[ अन्ये तु दुःखितसत्त्वाः संसारं पर्यटन्ति पापेन ।
व्यापादयितव्याः खलु ते तत्क्षपणार्थं ब्रुवते ॥ १३३ ॥]

अन्ये तु संसारमोचका ब्रुवत इति योगः। किं ब्रुवत इत्याह दुःखितसत्त्वाः कृमिपिपीलिकादयः संसारं पर्यटन्ति संसारमवगाहन्ते पापेनापुण्येन हेतुना यतश्चैवमतो व्यापादयितव्याः खलु ते खल्वित्यवधारणे व्यापादयितव्या एव ते दुःखितसत्त्वाः, किमर्थमित्याह तत्क्षपणार्थं पापक्षपणनिमित्तमिति ॥

ता पाणवहनिवित्ती नो अविसेसेण होइ कायव्वा ।
अवि अ सुहिएसु अन्नह करणिज्जनिसेहणे दोसो१३४

[ तत्प्राणवधनिवृत्तिः नो अविशेषेण भवति कर्तव्या
आपि च सुखितेषु अन्यथा करणीयनिषेधने दोषः१३४ ]

यस्मादेवं तत्तस्मात्प्राणवधनिवृत्तिर्नाविशेषेण भवति कर्तव्या अपि च सुखितेषु सुखितविषये कर्तव्या तद्व्यापादन एव दोषसंभवादन्यथा यद्येवं न क्रियते ततः करणीयनिषेधने दोषः कर्त-

व्यो हि परलोकार्थिना दुःखितानां पापक्षयः तन्निवृत्तिकरणे प्रव्रज्यादिदाननिवृत्तिकरणवद्दोष इत्येष पूर्वपक्षः ॥ अत्रोत्तरमाह ।

तहवहभावे पावक्खओ त्ति न उ अट्टज्झाणओ वंधो।
तेसिमिह किं पमाणं नारगनाओवगं वयणं ॥१३५॥

[ तथावधभावे पापक्षय इति न त्वार्तध्यानतो बन्धः ।
तेषामिह किं प्रमाणं नारकन्यायोपगं वचनम् ॥१३५॥]

तथा तेन प्रकारेण वधभावे व्यापत्तिकरणे पापक्षय एव न त्वार्तध्यानतो बन्धस्तेषां दुःखितानामपि किं प्रमाणं न किंचिदित्यर्थः, अत्राह, नारकन्यायोपगं वचनं नारकन्यायानुसारि वचनं प्रमाणमिति । एतदेव भावयति ॥

तेसिं वहिज्जमाण वि परमाहम्मिअसुरेहि अणवरयं ।
रुद्दज्झाणगयाण वि न तहा वंधो जहा विगमो॥१३६॥

[ तेषां वध्यमानानामपि परमाधार्मिकसुरैरनवरतम् ।
रौद्रध्यानगतानामपि न तथा बन्धो यथा विगमः१३६]

तेषां नारकाणां वध्यमानानां हन्यमानानामपि कैः परमाधार्मिकसुरैरम्बादिभिरनवरतं सततं रौद्रध्यानगतानामपि न तथा बन्धो यथा विगमः कर्मणो दुःखानुभवादिति गाथार्थः । कथमेतन्निश्चीयत इत्यत्राह ।

नरगाउवंधविरहा अणंतरं तंमि अणुववत्तीओ ।
तदभावेवि य खवणं परुप्परं दुक्खकरणाओ ॥१३७॥

[ नरकायुर्बन्धविरहादनन्तरं तस्मिन्ननुत्पत्तेः ।
तदभावेऽपि च क्षपणं परस्परं दुःखकरणात् ॥१३७॥ ]

नरकायुर्बन्धविरहात् न कदाचिन्नारको नरकायुर्बध्नाति, अत्र युक्तिमाह, अनन्तरं नरकोद्वर्तनसमनन्तरमेव तस्मिन्नरक एवानुत्पत्तेरनुत्पादात् न चाव्यवहितमुत्पद्यत इति सिद्धान्तः, ततश्च यथेदं न बध्नाति तथान्यदपीत्यभिप्रायः। तदभावेऽपि च परमाधार्मिकाद्यभावेऽपि च पङ्कादिपृथिवीषु क्षपणं कर्मणस्तेषां परस्परं दुःखकरणादन्योन्यपीडाकरणेन "परस्परोदीरितदुःखाः" ( तत्त्वार्थाधिगमसूत्रम् ३।४) इति वचनात् नान्यनिमित्तं क्षपणमिति स्यादप्रतिष्ठाने नान्यनिमित्तमित्येतदाशङ्क्याह।

अपइट्ठाणंमि वि संकिलेसओ चेव कम्मखवणं ति।
न हि तयभावंमि सुरो तत्थ वि य खवेइ तं कम्मं१३८

[ अप्रतिष्ठानेऽपि संक्लेशात एव कर्मक्षपणमिति।
न हि तदभावे सुरस्तत्रापि च क्षपयति तत्कर्म १३८ ]

अप्रतिष्ठानेऽपि सप्तमनरकपृथिवीनरके संक्लेशात एव तथोत्क्षेपनिपातजनितदुःखादेव कर्मक्षपणमिति नान्यथा, न यस्मात्तदभावे संक्लेशाभावे सुरो देवस्तत्रापि नरके यथासंभवं कथंचिद्गतः सन् चशब्दादन्यत्र च संक्लेशरहितः क्षपयति तत्कर्म परमाधार्मिकतो नरकवेदनीयमिति ॥ उपसंहरन्नाह।

तम्हा ते पहमाणो अट्टज्झाणाइगं जणंतो वि।
तक्कम्मक्खपहेउं न दोसवं होइ णायव्वो ॥ १३९ ॥

---

१ रमवयरे.

[ तस्मात्तान् घ्नन्नार्त्तध्यानादिकं जनयन्नपि ।
तेषां कर्मक्षयहेतुर्न दोषवान् भवति ज्ञातव्यः ॥१३९॥ ]

यस्मादेवं तस्मात्तान् दुःखितान्प्राणिनः घ्नन् व्यापादयन् आर्त्तध्यानादिकं जनयन्नपि आर्तरौद्रध्यानं चित्रं च संक्लेशं कुर्वन्नपि तेषां कर्मक्षयहेतुस्तेषां दुःखितानां कर्मक्षयनिमित्तमिति कृत्वा न दोषवान् भवति ज्ञातव्यः संसारमोचक इति अयमपि पूर्वपक्षः। अत्रोत्तरमाह ।

चिट्ठउ ता इह अन्नं तक्खवणे तस्स को गुणो होइ ।
कम्मक्खउ त्ति तं तुह किंकारणगं विणिद्दिट्ठं ॥१४०॥

[ तिष्ठतु तावदिहान्यत्तत्क्षपणे तस्य को गुणो भवति ।
कर्मक्षय इति तत्तव किंकारणकं निर्दिष्टम् ॥ १४० ॥

तिष्ठतु तावदिह प्रक्रमेऽन्यद्वक्तव्यं तत्क्षपणे दुःखितसत्त्वकर्मक्षपणे तस्य क्षपयितुर्दुःखितसत्त्वव्यापादकस्य को गुणो भवति न हि फलमनपेक्ष्य प्रवर्तते प्रेक्षावानिति, अथैवं मन्यसे कर्मक्षय इति कर्मक्षयो गुण इत्याशङ्क्याह । तत्कर्म तव हे वादिन् किंकारणं किंनिमित्तं निर्दिष्टं प्रतिपादितं शास्त्र इति ॥

अन्नाणकारणं जइ तदवगमा चेव अवगमो तस्स ।
किं वहकिरियाइ तओ विवज्जओ तीइ अह हेऊ१४१

[ अज्ञानकारणं यदि तदपगमादेवापगमस्तस्य ।
किं वधक्रियया ततः विपर्ययः तस्या अथ हेतुः॥१४१॥]

अज्ञानकारणं अज्ञाननिमित्तं यदि एतदाशङ्क्याह तदपगमा-

देवाज्ञाननिवृत्तेरेवापगममस्य निवृत्तिरस्य कर्मणः कारणाभावात् कार्याभाव इति न्यायात्किं वधक्रियया ततः अप्रतिपक्षता तस्या विपर्ययः तस्या वधक्रियायाः अथ हेतुरवधक्रियैवेति एतदाशङ्क्याह ।

मुत्ताण कम्मबंधो पावइ एवं निरत्थगा मुत्ती ।
अह तस्स पुन्नबंधो तओ वि न अंतरायाओ॥१४२॥

[ मुक्तानां कर्मबन्धः प्राप्नोति एवं निरर्थका मुक्तिः ।
अथ तस्य पुण्यबन्धः तकोऽपि नान्तरायात् ॥ १४२ ॥]

मुक्तानां कर्मबन्धः प्राप्नोति तस्यावधक्रियानिमित्तत्वात् मुक्तानां चावधक्रियोपेतत्वात्, एवं निरर्थका मुक्तिर्बन्धोपद्रुतत्वात्। अथैवं मन्यसे तस्य दुःखितसत्त्वव्यापादकस्य पुण्यबन्धो गुणो न तु कर्मक्षय इत्येतदाशङ्क्याह तकोऽपि न असावपि गुणो नान्तरायात्कारणादिति । एतदेव भावयति ।

वहमाणो ते नियमा करेइ वहपुन्नमंतरायं से।
ता कह णु तस्स पुन्नं तेसिं खवणं व हेऊओ ॥१४३॥

[ घ्नन् तान् नियमात्करोति वधपुण्यान्तरायममीषाम्।
तत्कथं तु तस्य पुण्यं तेषां क्षपणवद्हेतुकत्वात्॥१४३॥]

घ्नन् व्यापादयंस्तान् दुःखितसत्त्वान्नियमादवश्यमेव करोति निर्वर्तयति असौ व्यापादकः वधपुण्यान्तरायममीषां दुःखितसत्त्वानां जीवन्तो हि तेऽन्यदुःखितवधेन पुण्यं कुर्वन्ति व्यापादने तेषां अन्यवधाभावात्पुण्यान्तरायं यस्मादेवं तत्तस्मात्कथं नु

तस्य व्यापादकस्य पुण्यं नैवेत्यर्थः कुतः अहेतुकत्वादिति योग
न ह्यन्यपुण्यान्तरायकरणं पुण्यहेतुरिति सिद्ध एव हेतुः। दृष्टा
माह तेषां क्षपणवत् तेषां दुःखितसत्त्वानां व्यापाद्यमानानां क
क्षपणवदिति, अयमत्र भावार्थः, दुःखितसत्त्वव्यापत्त्या कर्मक्ष
इत्यभ्युपगमः ततश्च व्यापाद्यमानानामन्यव्यापादनाभावादहे
कत्वात्कुतः कर्मक्षय इति।

अह सगयं वहणं चिय हेऊ तस्स त्ति किं परवहेणं।
अप्पा खलु हंतव्वो कम्मक्खयमिच्छमाणेणं ॥१४४

[अथ स्वगतं हननमेव हेतुस्तस्य इति किं परवधेन।
आत्मैव हन्तव्यः कर्मक्षयमिच्छता ॥ १४४ ॥]

अथैवं मन्यसे स्वगतमात्मगतं हननमेव जिघांसनमेव हेतुस्त
कर्मक्षयस्यैतदाशङ्क्याह इति किं परवधेन एवं न किंचित्परव्य
पादनेनात्मैव हन्तव्यः कर्मक्षयमिच्छता स्वगतवधस्यैव त
मित्तत्वादिति ॥

अह उभयक्खयहेऊ वहु त्ति नो तस्स तन्निमित्ताओ।
अविरुद्धहेउजस्स य न निवित्ती इयरभावे वि॥१४५

[अथोभयक्षयहेतुर्वध इति न तस्य तन्निमित्तत्वात्।
अविरुद्धहेतुजस्य च न निवृत्तिरितरभावेऽपि॥१४५॥

अथैवं मन्यसे उभयक्षयहेतुर्वधः व्यापाद्यव्यापादककर्मक्षय
हेतुर्व्यापादनं कर्तृकर्मभावेन तदुभयनिमित्तत्वादस्यैतदाशङ्क्य

ह नतदेवं कुतमस्य कर्मणस्तन्निमित्तत्वात्तद्विरुद्धवधक्रियाजन्यत्वात्, यदि नामैवं ततः किमिति अत्राह अविरुद्धहेतुजस्य च निवृत्तिहेतुत्वाभिमताविरुद्धकारणजन्यस्य च वस्तुनो न निवृत्तिर्न विनाशः इतरभावेऽपि विनाशकारणाविरोधिपदार्थभावेऽपीति । एतदेव भावयति ॥

हिमजणियं सीयं चिय अवेइ अनलाओ नायवो वेइ
एवं अणब्भुवगमे अइप्पसंगो बला होइ ॥ १४६ ॥

[ हिमजनितं शीतमेवापैत्यनलात् नातपोऽपैति ।
एवमनभ्युपगमेऽतिप्रसङ्गो बलाद्भवति ॥ १४६ ॥ ]

हिमजनितं शीतमेवापैत्यनलात् शीतकारणविरोधित्वादनलस्य नातपोऽपैति तत्कारणाविरोधित्वादनलस्य एवमनभ्युपगमे कारणविरोधिनः सकाशान्निवृत्तिरित्यनङ्गीकरणेऽतिप्रसङ्गो बलाद्भवति तन्निवृत्तिवत्तदन्यनिवृत्तिलक्षणा अव्यवस्था नियमेनापद्यत इति । एतदेवाह ।

तब्भावंमि अ जं किंचि वत्थु जाओ कुओ वि न हविज्जा
एवं च सव्वभावो पावइ अन्नुन्नविक्खाए ॥ १४७ ॥

[ तदभावेऽपि च यत्किंचित् वस्तुजातं कुतश्चित् न भवेत्।
एवं च सर्वाभावः प्राप्नोत्यन्योन्यापेक्षया ॥ १४७ ॥ ]

तद्भावेऽपि चातिप्रसङ्गभावे च यत्किंचिदत्र वस्तुजातं यतः कुतश्चित्सकाशान्न भवेत् अप्रतिपक्षादपि निवृत्त्यभ्युपगमात् । अ- [illegible] एवं च सति सर्वाभावः प्राप्नोति अशेषपदार्थाभाव

आपद्यते, कुतो ऽन्योन्यापेक्षया अविरोधिनमप्यन्यमपेक्ष्यान्यस्य निवृत्तिरन्यं वान्यस्येति शून्यतापत्तिरिति ॥

अह तं अहेउगं चिय कहं नु अत्थि त्ति अवगमो कह य ।
नागासमाइयाणं कुओवि सिद्धो इह विणासो ॥१४८॥

[ अथ तदहेतुकमेव कथं त्वस्तीति अपगमः कथं च ।
नाकाशादीनां कुतश्चित्सिद्ध इह विनाशः ॥ १४८ ॥ ]

अथैवं मन्यसे तत्कर्माहेतुकमेव निर्हेतुकमेवेत्येतदाशङ्क्याह कथं त्वस्तीति नैवास्ति तदहेतुत्वात् खरविषाणादिवत्, आकाशादिना अहेतुकेन सता व्यभिचारमाशङ्क्याह अपगमः कथं विनाशश्च कथमस्येति एतदेव भावयति नाकाशादीनां नाकाशधर्मास्तिकायप्रभृतीनां कुतश्चिद्धेत्वादेः सिद्ध इह विनाशः अहेतुकत्वेन नित्यत्वादिति ॥

इत्तु चिय अफलत्ता नो कायव्वो वहु त्ति जीवाणं ।
वहहेउगं चिय तयं कहं निवित्ती तओ तस्स॥१४९॥

[ अतोऽपि अफलत्वात् न कर्तव्यो वधो जीवानाम् ।
वधहेतुकमेव तत् कथं निवृत्तिस्ततस्तस्य ॥ १४९ ॥ ]

अतो ऽपि वधहेतुककर्माविनाशित्वेन अफलत्वात् कर्मक्षयफलशून्यत्वात् न कर्तव्यो वधो जीवानामिति । वधहेतुकमेव तत्स्याद्वधनिमित्तमेव तत्कर्मेत्येतदाशङ्क्याह कथं केन प्रकारेण निवृत्तिर्व्यावृत्तिस्ततस्तस्माद्वधात्तस्य कर्मणः न हि यतो भवति तत एव न भवति भवनाभावप्रसङ्गादिति ।

ह नैतदेवं कुतस्तस्य कर्मणस्तन्निमित्तत्वात्तद्विरुद्धवधक्रियाजन्य त्वात्, यदि नामैवं ततः किमिति अत्राह अविरुद्धहेतुजस्य च निवृत्तिहेतुत्वाभिमताविरुद्धकारणजन्यस्य च यस्तुनो न निवृ त्तिर्न विनाशः इतरभावेऽपि विनाशकारणाविरोधिपदार्थभावे ऽपीति। एतदेव भावयति॥

हिमजणियं सीयं चिय अवेइ अनलाओ नायवो वेइ।
एवं अणब्भुवगमे अइप्पसंगो वला होइ॥ १४६॥

[ हिमजनितं शीतमेवापैत्यनलात् नातपोऽपैति।
एवमनभ्युपगमेऽतिप्रसङ्गो बलाद्भवति॥ १४६॥]

हिमजनितं शीतमेवापैत्यनलात् शीतकारणविरोधित्वादनलस्य नातपोऽपैति तत्कारणाविरोधित्वादनलस्य एवमनभ्युपगमे कारणविरोधिनः सकाशान्निवृत्तिरित्यनङ्गीकरणेऽतिप्रसङ्गो बलाद्भवति तन्निवृत्तिवत्तदन्यनिवृत्तिलक्षणा अव्यवस्था नियमेनापद्यत इति। एतदेवाह।

तब्भावंमि अ जं किंचि वत्थु जत्तो कुओ वि न हविज्जा
एवं च सव्वभावो पावइ अन्नुन्नविक्खाए॥ १४७॥

[ तदभावेऽपि च यत्किंचित् वस्तुजातं कुतश्चित् न भवेत्।
एवं च सर्वाभावः प्राप्नोत्यन्योन्यापेक्षया॥ १४७॥]

तद्भावेऽपि चातिप्रसङ्गभावे च यत्किंचिदत्र वस्तुजातं यतः कुतश्चित्सकाशान्न भवेत् अप्रतिपक्षादपि निवृत्त्यभ्युपगमात्। अत्रानिष्टमाह, एवं च सति सर्वाभावः प्राप्नोति अशेषपदार्थाभाव

[ अथ तत्स्वयमेव तकः क्षपयति इतरदपि किं न एवमेव।
कालेन क्षपयत्येव उपक्रमः क्रियते यथेन ॥ १५२ ॥ ]

अथैवं मन्यसे तत्पुण्यं स्वयमेव तक आत्मनैवासौ सुखितः क्षपयत्यनुभवेनैव वेदयतीत्येतदाशङ्क्याह इतरदपि पापं किं न एवमेव किं न स्वयमेव दुःखितः क्षपयति क्षपयत्येवेत्यर्थः । अथैवं मन्यसे कालेन प्रदीर्घेण क्षपयत्येव नात्रान्यथाभाव उपक्रमः क्रियते यथेन तस्यैव प्रदीर्घकालवेद्यस्य पापस्य स्वल्पकालवेद्यत्वमापाद्यते व्यापत्तिकरणेनेति एतदाशङ्क्याह ।

इयरस्स किं न कीरइ सुहीण भोगंगसाहणेणेवं ।
न गुण त्ति तंमि खविए सुहभावो चेव तत्तुत्ति १५३

[ इतरस्य किं न क्रियते सुखिनां भोगाङ्गसाधनेन एवं ।
न गुण इति तस्मिन् क्षपिते सुखभावादेव तदिति १५३ ]

इतरस्येति पुण्यस्य किं न क्रियते उपक्रमः सुखिनां भोगाङ्गसाधनेन कादमीरादेः कुंकुमादिसंपादनेन। अथैवं मन्यसे एवमुपक्रमद्वारेण न गुण इति तस्मिन्पुण्ये क्षपिते कुतः सुखभावादेव तत् इति यतः पुण्यात्सुखस्यैव प्रादुर्भावादिति एतदाशङ्क्याह ।

निरुवमसुक्खो मुक्खो न य सइ पुन्ने तओ त्ति किं न गुणो।
पावोदयसंदिद्धो इयरंमि उ निच्छओ केण ॥ १५४ ॥

[ निरुपमसौख्योमोक्षःनच सति पुण्ये तक इति कथं न गुणः
पापोदयसंदिग्ध इतरस्मिन् तु निश्चयः केन ॥ १५४ ॥]

निरुपमसौख्यो मोक्षः सकलाबाधानिवृत्तेरुभयसिद्धत्वाद्य च

तम्हा पाणवहोवज्जियस्स कम्मस्स खवणहेउत्ता।
तव्विरई कायव्वा संवररूव त्ति नियमेणं ॥ १५० ॥

[ तस्मात्प्राणवधोपार्जितस्य कर्मणः क्षपणहेतुत्वात्।
तद्विरतिः कर्तव्या संवररूपेति नियमेन ॥ १५० ॥

यस्मादेवं वधहेतुकमेव तत्तस्मात्प्राणवधोपार्जितस्य कर्मणः क्षपणहेतुत्वात्तद्विरतिर्वधविरतिः कर्तव्या संवररूपेति वधविरतिविशेषणा नियमेनावश्यतयेति ॥ किं च

सुहिएसु वि वहविरई कह कीरइ नत्थि पावमह तेसु।
पुन्नक्खओ वि हु फलं तब्भावे मुत्तिविरहाओ ॥१५१॥

[ सुखितेष्वपि वधविरतिः किं क्रियते नास्ति पापमथ तेषु।
पुण्यक्षयोऽपि फलमेव तद्भावे मुक्तिविरहात् ॥१५१॥ ]

सुखितेष्वपि प्राणिषु वधविरतिर्व्यापादननिवृत्तिः किं क्रियते भवद्भिर्नास्ति पापं क्षपणीयमथ तेषु सुखितेषु पुण्यनिमित्तत्वात्सुखस्य एतदाशङ्क्याह पुण्यक्षयोऽपि तद्व्यापत्तिजनितः फलमेव अनन्तेष्वपि वधविरतिप्रसङ्गः कथं पुण्यक्षयः फलं तद्भावे पुण्यभावे मुक्तिविरहात् मोक्षाख्यप्रधानफलाभावात् पुण्यापुण्यक्षयनिमित्तत्वात्सर्वेति ।

अह तं सयं चिय तओ खवेइ इयरं पि किं न एमेव।
कालेणं खवइ च्चिय उवक्कमो कीरइ वहेण ॥ १५२ ॥

[ अथ तत्स्वयमेव तकः क्षपयति इतरदपि किं न एवमेव।
कालेन क्षपयत्येव उपक्रमः क्रियते वधेन ॥ १५२ ॥ ]

अथैवं मन्यसे तत्पुण्यं स्वयमेव तक आत्मनैवासौ सुखितः क्षपयत्यनुभवेनैव वेदयतीत्येतदाशङ्क्याह इतरदपि पापं किं न एवमेव किं न स्वयमेव दुःखितः क्षपयति क्षपयत्येवेत्यर्थः । अथैवं मन्यसे कालेन प्रदीर्घेण क्षपयत्येव नात्रान्यथाभाव उपक्रमः क्रियते वधेन तस्यैव प्रदीर्घकालवेद्यस्य पापस्य स्वल्पकालवेद्यत्वमापाद्यते व्यापत्तिकरणेनेति एतदाशङ्क्याह ।

इयरस्स किं न कीरइ सुहीण भोगंगसाहणेणेवं ।
न गुण त्ति तंमि खविए सुहभावो चेव तत्तुत्ति १५३

[ इतरस्य किं न क्रियते सुखिनां भोगाङ्गसाधनेन एवं ।
न गुण इति तस्मिन् क्षपिते सुखभावादेव तदिति १५३ ]

इतरस्येति पुण्यस्य किं न क्रियते उपक्रमः सुखिनां भोगाङ्गसाधनेन काश्मीरादेः कुंकुमादिसंपादनेन। अथैवं मन्यसे एवमुपक्रमद्वारेण न गुण इति तस्मिन्पुण्ये क्षपिते कुतः सुखभावादेव तत् इति ततः पुण्यात्सुखस्यैव प्रादुर्भावादिति एतदाशङ्क्याह ।

निरुवमसुक्खो मुक्खो न य सइ पुन्ने तओ त्ति किं न गुणो।
पावोदयसंदिद्धो इयरंमि उ निच्छओ केण ॥ १५४ ॥

[ निरुपमसौख्योमोक्षःनच सति पुण्ये तक इति कथं न गुणः
पापोदयसंदिग्ध इतरस्मिन् तु निश्चयः केन ॥ १५४ ॥]

निरुपमसौख्यो मोक्षः सकलाबाधानिवृत्तेरुभयसिद्धत्वात्र च

सति पुण्ये तकोऽसौ पुण्यक्षयनिमित्तत्वात्तस्येति एवं कथं न गुणः पुण्योपक्रमकरणे गुण एव। अथैवं मन्यसे पापोदयसंदिग्धो ऽसौ न ह्यत्र निश्चय उपक्रमेण पुण्ये क्षपिते तस्य मोक्ष एव भविष्यति न तु पापोदय इति, एतदाशङ्क्याह इतरस्मिन् तु दुःखितपापक्षपणे निश्चयः केन यदुत तस्यैवमेवार्थो न पुनरनर्थ इति एतदेव भावयति ॥

दुहिओ वि नरगगामी वहिओ सो अवहिओ वहू अन्ने।
वहिऊण न गच्छिज्जा कयाइ ता कह न संदेहो॥१५५॥

[ दुःखितोऽपि नरकगामी हतः सो ऽहतो बहूनन्यान्।
हत्वा न गच्छेत् कदाचित् तस्मात्कथं न संदेहः १५५]

दुःखितोऽपि मत्स्यबन्धादिर्नरकगामी हतः सन् कदाचित्स्या- दिति योगः नरकसंवर्तनीयस्य कर्मणः उ[illegible] तत्संभवात् वेद्यमानोपक्रमे च तदुदयप्रसङ्गात् स एव [illegible]ऽव्यापादितः सन् बहूनन्यान् दुःखितान् हत्वा त्वन्मते[illegible]तत्पक्षयान्न गच्छेत् कदाचित् यस्मादेवं तस्मात्कथं न [illegible]ह दुःखितपापक्षपणेऽपि संएवेति ॥ अधुना प्रागुपन्यस्तं नारकन्यायमधिकृत्याह ।

नेरइयाण वि तह देहवेयणातिसयभावओ भायं।
नाईवसंकिलेसो समोहयाणं व विन्नेओ ॥ १५६ ॥

[ नारकानामपि तथा देहवेदनातिशयभावतः प्रायः।
[illegible]ः समवहतानामिव विज्ञेयः ॥ १५६ ॥]

नारकानामप्युदाहरणतयोपन्यस्तानां तथा तेन प्रकारेण नरकवेदनीयकर्मोदयजनितेन देहवेदनातिशयभावतः शरीरवेदनायास्तीव्रभावेन प्रायो बाहुल्येन नातीवसंक्लेशः क्रूरादिपरिणामलक्षणः समवहतानामिव विज्ञेयः वेदनातिशयेनान्तःकरणव्यापाराभिभवादिति एतदेवाह ।

इत्थ वि समोहया मूढचेयणा वेयणाणुभवखिन्ना ।
तम्मित्तचित्तकिरिया न संकिलिस्संति अन्नत्थ १५७

[ अत्रापि समवहता मूढचेतना वेदनानुभवखिन्नाः ।
तन्मात्रचित्तक्रिया न संक्लिश्यन्ते अन्यत्र ॥ १५७ ॥ ]

*अत्रापि तिर्यग्लोके समवहता वेदनासमुद्घातेनावस्थान्तरमुपनीता मूढचेतना विशिष्टस्वव्यापाराक्षमचैतन्या वेदनानुभवखिन्नाः तीव्रवेदनासंवेदनेन श्रान्ताः तन्मात्रचित्तक्रिया वेदनानुभवमात्रचित्तव्यापारा न संक्लिश्यन्ते न रागादिपरिणामं यान्ति अन्यत्र स्त्र्यादौ तत्रैव निरोधादिति।*

ता तिव्वरागदोसाभावे बंधो वि पयणुओ तेसिं।
सम्मोहओ च्चिय तहा खओ वि णेगंतमुक्कोसो१५८

[ तत्तीव्ररागद्वेषाभावे बन्धोऽपि प्रतनुस्तेषाम् ।
सम्मोहत एव तथा क्षयोऽपि नैकान्तोत्कृष्टः ॥१५८॥ ]

यस्मादेवं तत्तस्मात्तीव्ररागद्वेषाभावे बन्धोऽपि प्रतनुस्तेषां समवहतानां निमित्तदौर्बल्यात् सम्मोहत एव तथा क्षयोऽपि

सति पुण्ये तत्कोऽर्मा पुण्यक्षयनिमित्तत्वात्तस्येति एवं कथं न गुणः पुण्योपक्रमकरणे गुण एव। अथैवं मन्यसे पापोदयमंदिरो ऽसौ न यत्र निश्चय उपक्रमेण पुण्ये क्षपिते तस्य मोक्ष एव भविष्यति न तु पापोदय इति, एतदाशङ्क्याह इतरस्मिन् तु दुःखितपापक्षपणे निश्चयः केन यदुत तत्संयमेवार्थी न पुनरनर्थ इति एतदेव भावयति ॥

दुहिओ वि नरगगामी वहिओ सो अवहिओ वहू अन्ने।
वहिऊण न गच्छिज्जा कयाइ ता कह न संदेहो॥१५५॥

[ दुःखितोऽपि नरकगामी हतः सो ऽहतो बहूनन्यान्।
हत्वा न गच्छेत् कदाचित् तस्मात्कथं न संदेहः १५५]

दुःखितोऽपि मत्स्यबन्धादिर्नरकगामी हतः सन् कदाचित्स्यादिति योगः नरकसंवर्तनीयस्य कर्मणः अ[illegible]त्संभवात् वेद्यमानोपक्रमे च तदुदयप्रसङ्गात् स एव [illegible]ोऽव्यापादितः सन् बहूनन्यान् दुःखितान् हत्वा त्वन्मते[illegible]पक्षयान्न गच्छेत् कदाचित् यस्मादेवं तस्मात्कथं न [illegible]हः दुःखितपापक्षपणेऽपि संदेह एवेति ॥ अधुना प्रागुपन्यस्तं नारकन्यायमधिकृत्याह।

नेरइयाण वि तह देहवेयणातिसयभावओ पायं।
नाईवसंकिलेसो समोहयाणं व विन्नेओ ॥ १५६ ॥

[ नारकानामपि तथा देहवेदनातिशयभावतः प्रायः।
कालेऽणिवसंक्लेशः समवहतानामिव विज्ञेयः ॥ १५६ ॥ ]

नारकानामप्युदाहरणतयोपन्यस्तानां तथा तेन प्रकारेण नरकवेदनीयकर्मोदयजनितेन देहवेदनातिशयभावतः शरीरवेदनायास्तीव्रभावेन प्रायो बाहुल्येन नातीवसंक्लेशः क्रूरादिपरिणामलक्षणः समवहतानामिव विज्ञेयः वेदनातिशयेनान्तःकरणव्यापाराभिभवादिति एतदेवाह।

इत्थ वि समोहया मूढचेयणा वेयणाणुभवखिन्ना।
तंमित्तचित्तकिरिया न संकिलिस्संति अन्नत्थ १५७

[ अत्रापि समवहता मूढचेतना वेदनानुभवखिन्नाः।
तन्मात्रचित्तक्रिया न संक्लिश्यन्ते अन्यत्र ॥ १५७ ॥ ]

अत्रापि तिर्यग्लोके समवहता वेदनासमुद्घातेनावस्थान्तरमुपनीता मूढचेतना विशिष्टस्वव्यापाराक्षमचैतन्या वेदनानुभवखिन्नाः तीव्रवेदनासंवेदनेन श्रान्ताः तन्मात्रचित्तक्रिया वेदनानुभवमात्रचित्तव्यापारा न संक्लिश्यन्ते न रागादिपरिणामं यान्ति अन्यत्र स्यादौ तत्रैव निरोधादिति।

ता तिव्वरागदोसाभावे बंधो वि पयणुओ तेसिं।
सम्मोहओ चिय तहा खओ वि णेगंतमुक्कोसो१५८

[ तत्तीव्ररागद्वेषाभावे बन्धोऽपि प्रतनुस्तेषाम्।
सम्मोहत एव तथा क्षयोऽपि नैकान्तोत्कृष्टः ॥१५८॥ ]

यस्मादेवं तत्तस्मात्तीव्ररागद्वेषाभावे बन्धोऽपि प्रतनुस्तेषां समवहतानां निमित्तदौर्बल्यात् सम्मोहत एव तथा क्षयोऽपि

किं इय न तित्थहाणी किं वा वहिओ न गच्छई नरयं।
सीहो किं वा सम्मं न पावई जीवमाणो उ ॥१६९॥

[ किमेवं न तीर्थहानिः किं वा वधितो न गच्छति नरकम्।
सिंहः किं वा सम्यक्त्वं न प्राप्नोति जीवन् तु ॥१६९॥ ]

किमेवं न तीर्थहानिस्तीर्थहानिरेव । किं वा वधितो व्यापादितः क्रूराशयत्वान्न गच्छति नरकं सिंहो गच्छत्येव । किं वा सम्यक्त्वं न प्राप्नोति जीवन् सिंहोऽतिशयवत्साधुसमीपे संभवति प्राप्तिरिति॥

किं वा तेणावहिओ कहिंचि अहिमाइणा न खज्जेज्जा
सो ता इहंपि दोसो कहं न होइ त्ति चिंतमिणं १७०

[ किं वा तेनाहतः कथंचित् अह्यादिना न खाद्येत ।
स तस्मादिहापि दोषः कथं न भवतीति चिन्त्यमिदं१७०]

किं वा तेन सिंहेनाहतोऽव्यापादितः सन् कथंचिद्रजन्यां प्रमादादह्यादिना सर्पेण गोनसेन वा न खाद्येत स आचार्यः संभवति सर्वमेतत् यस्मादेवं तस्मादिहापि दोषो भवदभिमतः कथं न भवतीति चिन्त्यमिदं विचारणीयमेतदिति ॥ यतश्चैवमतः ।

सव्वपवित्तिअभावो पावइ एवं तु अन्नदाणे वि ।
तत्तो विसूइयाई न संभवंतित्थ किं दोसा ॥ १७१ ॥

[ सर्वप्रवृत्त्यभावः प्राप्नोत्येवं तु अन्नदानेऽपि।
ततः विसूचिकादयः न संभवन्त्यत्र किं दोषाः॥१७१॥]

सर्वप्रवृत्त्यभावः प्राप्नोत्येवमागन्तुकदोषसंभवात् एवं च सत्यन्न-

दानेऽपि न प्रवर्तितव्ये। अपिशब्दाददानेऽपि। ततोऽक्षदानादेर्विसूचिकादयो विसूचिका मरणं अदाने प्रद्वेषतो धनहरणव्यापादनादयो न संभवन्त्यत्राक्षदानादौ किं दोषाः संभवन्त्येवेति ॥ तथा

सयमवि य अपरिभोगो एत्तो च्चिय एवं गमणमाई वि
सव्वं न जुज्जइ च्चिय दोसासंकानिवित्तीओ ॥१७२॥

[ स्वयमपि चापरिभोगः अत एव एवं गमनाद्यपि।
सर्वं न युज्यत एव दोषाशंकानिवृत्तेः ॥ १७२ ॥

स्वयमपि चापरिभोगोऽक्षादेरत एवागन्तुकदोषसंभवादेव। एवं गमनाद्यपि गमनमागमनमवस्थानं सर्वं न युज्यत एव दोषाशङ्कानिवृत्तेः गच्छतोऽपि कण्टकवेधादिसंभवादागच्छतोऽपि अवस्थानेऽपि गृहपातादिसंभवदर्शनादिति ॥

अणिवित्ती वि हु एवं कह कायव्व त्ति भणियदोसाओ।
आलोयणं पि अवराहसंभवाओ ण जुत्तं ति॥१७३॥

[ अनिवृत्तिरपि खलु एवं कथं कर्तव्येति भणितदोषात्।
आलोचनमपि अपराधसंभवात् न युक्तमिति॥१७३॥ ]

अनिवृत्तिरप्येवं कथं कर्तव्येति भणितदोषादनिवृत्तित एव राजपथूरादिव्यापादनेन दोषसंभवात्। आलोचनमपि प्रागुपदिष्टं (१६७) आत्यन्तिककार्यविशरवात् किमप्येते आलोचयन्तीति चान्यापकारप्रवृत्तेरपराधसंभवात्र युक्तमेवेति ॥ उपसंहरन्नाह

इय अणुभवलोगागमविरुद्धमेयं न नायसमयाणं।
मइविब्भमस्स हेऊ वयणं भावत्थनिरसारं ॥१७४॥

[ एवं अनुभवलोकागमविरुद्धमेतत् न ज्ञानसमयानाम्।
मतिविभ्रमस्य हेतुः वचनं भावार्थनिस्सारम् ॥१७४॥]

इय एवं अनुभवलोकागमविरुद्धमेतत् । निवृत्तौ परिणामशुद्ध्यनुभवादनुभवविरुद्धं समुद्रादिप्रतरणादिप्रवृत्तेर्लोकविरुद्धं यस्य कस्यचिद्विधानादागमविरुद्धं एतत्पूर्वपक्षवादिवचनमिति योगः। न ज्ञातसमयानां नावगतसिद्धान्तानां मतिविभ्रमस्य हेतुः कथमेतच्छोभनं मतिविप्लवस्य कारणं किं विशिष्टं वचनं भावार्थनिस्सारं अभिप्रेतगर्भार्थशून्यमिति । यस्मादेवं

तम्हा विसुद्धचित्ता जिणवयणविहीइ दोवि सद्धाला।
वहविरइसमुज्जुत्ता पावं छिंदंति धिइबलिणो॥१७५॥

[तस्माद्विशुद्धचित्तौ जिनवचनविधिना द्वावपि श्रद्धावन्तौ
वधविरतिसमुद्युक्तौ पापं छिन्तः धृतिबलिनौ ॥१७५॥ ]

तस्माद्विशुद्धचित्तौ अपेक्षारहितौ जिनवचनविधिना प्रवचनोक्तेन प्रकारेण द्वावपि प्रत्याख्यातृप्रत्याख्यापयितारौ श्रद्धावन्तौ वधविरतिसमुद्युक्तौ यथाशक्त्या पालनोद्यतौ पापं छिन्तः कर्म क्षपयतः धृतिबलिनौ अप्रतिपतितपरिणामाविति ॥

सांप्रतमन्यद्वादस्थानकम् ।

निच्चाण वहाभावा पयइअणिच्चाण चेव निव्विसया ।
एगंतेणेव इहं वहविरइं केइ मन्नंति ॥ १७६ ॥

[ नित्यानां वधाभावात्प्रकृत्यनित्यानां चैव निर्विषया ।
एकान्तेनैव इह वधविरतिः केचन मन्यन्ते ॥ १७६ ॥]

जीवाः किल नित्या वा स्युरनित्या वेत्युभयथापि दोषः नित्यानां वधाभावात् प्रकृत्यनित्यानां चैव स्वभावभङ्गुराणां चैव वधाभावात् निर्विषया निरालंबना एकान्तेनैव अत्र पक्षद्वये का वधविरतिः संभवाभावात् केचन वादिनो मन्यन्त इति। एतदेव भावयति

एगसहावो निच्चो तस्स कह वहो अणिच्चभावाओ।
पयइअणिच्चस्स वि अन्नहेऊभावाणवेक्खाओ॥१७७॥

[एकस्वभावो नित्यः तस्य कथं वधः अनित्यभावात्।
प्रकृत्यनित्यस्यापि अन्यहेतुभावानपेक्षातः ॥ १७७ ॥]

एकस्वभावोऽप्रच्युतानुत्पन्नस्थिरैकधर्मा नित्यः तस्य कथं वधः जिघांसनमनित्यभावादतादवस्थ्यो नानित्यत्वापत्तेरित्यर्थः प्रकृत्यनित्यस्यापि स्वभावतोऽप्यनित्यस्य कथं वध इति वर्तते कथं च नेत्याह अन्यहेतुभावानपेक्षातः स्वव्यतिरिक्तहेतुसत्तानपेक्षत्वात् तत्स्वभावत्वे च स्वत एव निवृत्तेरिति। प्रक्रान्तोपचयमाह।

किं च सरीरा जीवो अन्नो णन्नो व हुज्ज जइ अन्नो
ता कह देहवहंमि वि तस्स वहो घडविणासे व १७८

[किं च शरीरात् जीवः अन्योऽनन्यो वा भवेत् यद्यन्यः।
तत्कथं देहवधेऽपि तस्य वधः घटविनाश इव॥१७८॥]

किं चान्यच्छरीरात्सकाशाज्जीवोऽन्योऽनन्यो वा भवेत् द्वयी गतिः किं चातः यद्यन्यस्तत्कथं देहवधे प्रकृतिविकारत्वेनार्थान्त-

रभूतदेहविनाशे तस्य जीवस्य वधो नैवेत्यर्थः घटविनाश इव न हि घटे विनाशिते जीववधो दृष्टः तदर्थान्तरत्वादिति।

द्वितीयं विकल्पमधिकृत्याह

अह उ अणन्नो देह व्व सो तओ सव्वहा विणस्सिज्जा।
एवं न पुण्णपावा वहविरई किंनिमित्ता भे ॥१७९॥

[अथ त्वनन्यः देह इवासौ ततः सर्वथा विनश्येत्।
एवं न पुण्यपापे वधविरतिः किंनिमित्ता भवताम् १७९]

अथ त्वनन्यः शरीराज्जीव इत्येतदाशङ्क्याह। देह इवासौ ततः अनन्यत्वाद्धेतोः सर्वथा विनश्येत्। शरीरं च विनश्यत्येव न परलोकयायि। एवं च न पुण्यपापे भोक्तुरभावात् वधविरतिः किंनिमित्ता भे भवतां विरतिवादिनामिति एष पूर्वपक्षः। अत्रोत्तरमाह।

निच्चाणिच्चो जीवो भिन्नाभिन्नो य तह सरीराओ।
तस्स वहसंभवाओ तव्विरई कहमविसया उ॥१८०॥

[नित्यानित्यो जीवो भिन्नाभिन्नश्च तथा शरीरात्।
तस्य वधसंभवात् तद्विरतिः कथमविषया तु ॥१८०॥]

एकान्तनित्यत्वादिभेदप्रतिषेधेन नित्यानित्यो जीवो द्रव्यपर्यायरूपत्वात् भिन्नाभिन्नश्च तथा शरीरात् तथोपलब्धेः अन्यथा दृष्टेष्टविरोधात् तस्य वधसंभवाद्धेतोस्तद्विरतिर्वधविरतिः कथमविषया नैवेत्यर्थः।

नित्यानित्यत्वव्यवस्थापनायाह

निच्चाणिच्चो संसारलोगववहारओ मुणेयव्वो ।
न य एगसहावंमी संसाराई घडंति त्ति ॥ १८१ ॥

[ नित्यानित्यः संसारलोकव्यवहारतः मुणितव्यः ।
न चैकस्वभावे संसारादयो घटन्त इति ॥ १८१ ॥ ]

नित्यानित्यो जीव इति गम्यते कुतः संसाराल्लोकव्यवहारतो मुणितव्यः स एव सत्त्वा नरकं व्रजन्तीत्यादि संसारात् गत आगम इति लोकव्यवहाराच्च विज्ञेय इति । विपक्षव्यवच्छेदार्थमाह । न चैकस्वभावे न च नित्याद्येकधर्मिण्येवात्मनि संसारादयो घटन्त इति गाथासमुदायार्थः ॥ अधुना अवयवार्थमाह ।

निच्चस्स सहावंतरमपावमाणस्स कह णु संसारो ।
जंमाणंतरनट्ठस्स चेव एगंतओ मूलो ॥ १८२ ॥

[ नित्यस्य स्वभावान्तरमप्राप्नुवतः कथं नु संसारः ।
जन्मानन्तरनष्टस्यैव एकान्ततोऽमूलः ॥ १८२॥]

नित्यस्याप्रच्युतानुत्पन्नस्थिरैकस्वभावेन हेतुना स्वभावान्तरमप्राप्नुवतः सदैवैकरूपत्वात् कथं नु संसारो नैव विचित्रत्वात्तस्य ज-न्मानन्तरनष्टस्यैव च सर्वथोत्पत्त्यनन्तरापवर्गिणःएकान्ततोऽमूलः तस्यैव तथापरिणामवैकल्यत एकान्तेनैवाकारणः कुतः संसार इति

एसो च्चिय ववहारो गमणागमणाइ लोगसंसिद्धो
न घडइ जं परिणामी तम्हा सो होइ नायव्वो॥१८३॥

[अत एव व्यवहारो गमनागमनादिर्लोकसंसिद्धः ।
न घटते यत् परिणामी तस्मात् असौ भवति ज्ञातव्यः ॥१८३॥]

अत एवानन्तरोदितादेकान्तनित्यत्वादेर्हेतोर्व्यवहारो गमनागमनादिर्न घटते एकत्रैकस्वभावस्याध्यासितदेशव्यतिरेकेण देशान्तराध्यासायोगात् अन्यत्र च तस्यैवाभावेनापरानुत्पत्तेरिति । आदिशब्दात्स्थानशयनासनभोजनादिपरिग्रहः यद्यस्मादेवं तस्मात्परिणाम्यसावात्मा भवति ज्ञातव्यः, परिणामलक्षणं चेदं ।

परिणामो ह्यर्थान्तरगमनं न तु सर्वथा व्यवस्थानं ।
न च सर्वथा विनाशः परिणामस्तद्विदामिष्टः ॥ १ ॥ इति ।

एतदेव भावयति

जह कंचणस्स कंचणभावेण अवट्ठियस्स कडगाई ।
उप्पज्जंति विणस्संति चेव भावा अणेगविहा॥१८४॥

[यथा कांचनस्य कांचनभावेन अवस्थितस्य कटकादयः।
उत्पद्यन्ते विनश्यन्ति चैव भावा अनेकविधाः॥१८४॥]

यथा काञ्चनस्य सुवर्णस्य काञ्चनभावेन सर्वभावानुयायिन्या सुवर्णसत्तया अवस्थितस्य कटकादयः कटककेयूरकर्णालंकारादयः उत्पद्यन्ते आविर्भवन्ति विनश्यंति च तिरोभवन्ति च भावाः पर्यायाः अनेकविधा अन्वयव्यतिरेकवन्तः स्वसंवेदनसिद्धा अनेकप्रकारा इति

एवं च जीवदव्वस्स दव्वपज्जवविसेसभइयस्स ।
निच्चत्तमणिच्चत्तं च होइ णाओवलभंतं ॥ १८५ ॥

[ एवं च जीवद्रव्यस्य द्रव्यपर्यायविशेषभक्तस्य ।
नित्यत्वमनित्यत्वं च भवति न्यायोपलभ्यमानम् ॥१८५॥]

एवं च जीवद्रव्यस्य विविदिषयैव द्रव्यपर्यायविशेषभक्तस्य तदुभयविवक्षया उभयरूपतया विकल्पितस्य नित्यत्वमनित्यत्वं च भवति न्यायोपलभ्यमानं । पृथग्विभक्तिकरणं द्वयोरपि निमित्तभेदख्यापनार्थं न्यायः पुनरिह नारकाद्यवस्थासु मिथो भिन्नास्वपि जीवान्वय उपलभ्यते तस्मिंश्च नारकादिभेद इति ।

द्वितीयपक्षमधिकृत्याह ।

एगंतेण सरीराद्ण्णत्ते तस्स तक्कओ बंधो ।
न घडइ न य सो कत्ता देहादत्थंतरभूओ ॥१८६॥

[ एकान्तेन शरीरादन्यत्वे तस्य तत्कृतः बन्धः ।
न घटते न चासौ कर्ता देहादर्थान्तरभूतः ॥ १८६ ॥]

एकान्तेन सर्वथा शरीरादन्यत्वे अभ्युपगम्यमाने तस्य जीवस्य किं तत्कृतो बन्धः जीवस्य शरीरनिर्वर्तितो बन्धो न घटते न हि स्वत एव गिरिशिखरपतितपाषाणतो जीवघाते देवदत्तस्य बन्ध इति । स्यादर्थान्तरस्यापि तत्करणकर्तृत्वेन बंध इत्येतदाशंक्याह- न चासौ कर्ता देहादर्थान्तरभूतः निःक्रियत्वान्मुक्तादिभिरतिप्रसङ्गादिति । स्यादेतत्प्रकृतिः करोति पुरुष उपभुंक्ते इत्येतदाशंक्याह

अन्नकयफलुवभोगे अइप्पसंगो अचेयणं कह य ।
कुणइ तयं तदभावे भुंजइ य कहं अमुत्तो त्ति ॥१८७॥

[ अन्यकृतफलोपभोगेऽतिप्रसंगः अचेतनं कथं च।
करोति तकं तदभावे भुंक्ते च कथं अमूर्त इति॥१८७॥]

अन्यकृतफलोपभोगे प्रकृत्यादिनिवर्तितफलानुभवेऽभ्युपगम्यमानेऽतिप्रसङ्गः भेदाविशेषेऽन्यकृतस्यान्यानुभवप्रसङ्गात् वास्तवसंबंधाभावात् अचेतनं च कथं करोति तत्प्रधानं किंचिदध्यवसायशून्यत्वात् घटवत् न हि घटस्यापराप्रेरितस्य क्वचित्करणमुपलब्धं न च प्रेरकः पुरुषः उदासीनत्वादेकस्वभावत्वाच्च तदभावे भोग्याभावे शरीराभावे वा भुंक्ते च कथं अमूर्त इति बुद्धिप्रतिबिम्बोदयरूपोऽपि भोगो न युज्यते अमूर्तस्य प्रतिबिम्बाभावात् भावेऽपि मुक्तादिभिरतिप्रसङ्गः न च सन्निहितमपि किंचिदेव प्रतिबिंब्यते न सर्वं तत्स्वभावमिति विशेषहेत्वभावात् अलं प्रसङ्गेन। किं च

न य चेयणा वि अणुभवसिद्धा देहंमि पावई एवं।
तीए विरहंमि दढं सुहदुक्खाई न जुज्जंति ॥ १८८ ॥

[ न च चेतनापि अनुभवसिद्धा देहे प्राप्नोति एवम्।
तस्या अभावे दृढं सुखदुःखादयो न युज्यन्ते ॥१८८॥]

न च चेतनापि अनुभवसिद्धा स्पृष्टोपलब्धिद्वारेण देहे प्राप्नोति एवमेकान्तभेदे सति, न हि घटे काष्ठादिना स्पृष्टे चैतन्यं, वेद्यते च देह इति, तस्याश्चेतनाया विरहे चाभावे च दृढमत्यर्थं सुखदुःखादयो न युज्यन्ते, न हि पाषाणप्रतिमायां सुखादयोऽचेतनत्वादिति, यदि न युज्यन्ते नाम का हानिरित्येतदाशंक्याह

सगचंदणविससत्थाइजोगओ तस्स अह य दीसंति
तब्भावंमि वि तब्भिन्नवत्थुपगए ण एवं तु ॥१८९॥

[ स्रक्चन्दनविषशस्त्रादियोगतः तस्य अथ च दृश्यन्ते ।
तद्भावेऽपि तद्भिन्नवस्तुप्रगते न एवं तु ॥ १८९ ॥ ]

स्रक्चन्दनविषशस्त्रादियोगतस्तस्य शरीरस्याथ च दृश्यन्ते स्वकीयेऽनुभवेन अन्यदीये रोमाञ्चादिलिङ्गत इति । विपर्य... बाधामाह । तद्भावेऽपि स्रगादिभावेऽपि तद्भिन्नवस्तुप्रगते आत्म... भिन्नघटादिवस्तुसंगते न एवं सुखादयो दृश्यन्ते। न हि घटे स्रगा... दिभिश्चर्चितेऽपि देवदत्तस्य सुखादय इति । उपसंहरन्नाह

अन्नुन्नाणुगमाओ भिन्नाभिन्नो तओ सरीराओ
तस्स य वहंमि एवं तस्स वहो होइ नायव्वो ॥१९०॥

[ अन्योन्यानुगमात् भिन्नाभिन्नोऽसौ शरीरात् ।
तस्य च वधे एवं तस्य वधो भवति ज्ञातव्यः ॥१९०॥

अन्योन्यानुगमाज्जीवशरीरयोरन्योन्यानुवेधाद्भिन्नाभिन्नो ऽसौ जीवः शरीरात् आदान्योन्यरूपानुवेधे इतरेतररूपापत्तिरतस्तथ...

नामूर्तं मूर्ततां याति मूर्तं नायात्यमूर्तताम् ।
द्रव्यं त्रिष्वपि कालेषु व्ययते नात्मरूपतः ॥

इति वचनात्स्वमतविरोधो न भगवद्वोद्ददानात् आत्मदा... नात् तदनुभवविरुद्धवस्तुवादी भगवान् नयविषयत्वात्, तस्य च...

शरीरस्य वधे घाते एवमुक्तन्यायाज्जीवानुवेधसिद्धौ, तस्य जीवस्य वधो भवति ज्ञातव्य इति ।

अधुना वधलक्षणमेवाह

**तप्पज्जायविणासो दुक्खुप्पाओ अ संकिलेसो य ।**
**एस वहो जिणभणिओ वज्जेयव्वो पयत्तेणं ॥१९१॥**

[ तत्पर्यायविनाशः दुःखोत्पादश्च संक्लेशश्च ।
एष वधो जिनभणितः वर्जयितव्यः प्रयत्नेन ॥१९१॥ ]

तत्पर्यायविनाशः मनुष्यादिजीवपर्यायविनाशः, दुःखोत्पादश्च व्यापाद्यमानस्य, चित्तसंक्लेशश्च क्लिष्टचित्तोत्पादश्चात्मनः एष वधो व्यस्तः समस्तो वा ओघतो जिनभणितः तीर्थकरोक्तो वर्जयितव्यः प्रयत्नेनोपयोगसारेणानुष्ठानेनेति ॥

इदानीमन्यद्वादस्थानकम् ।

**अन्ने अकालमरणस्सभावओ वहनिवित्तिमो मोहा**
**वंझासुअपिसियासणनिवित्तितुल्लं ववइसंति ॥१९२॥**

[ अन्येऽकालमरणस्याभावात् वधनिवृत्तिर्मोहात् ।
वंध्यासुतपिशिताशननिवृत्तितुल्यां व्यपदिशन्ति१९२ ]

अन्ये वादिनः स्वकृतकर्मफलं प्रत्युपभोगभावेन अकालमरणस्याभावाद्वधनिवृत्तिमेव मोहाद्धेतोर्वन्ध्यासुतपिशिताशननिवृत्तितुल्यां व्यपदिशन्ति। वन्ध्यासुतस्यैवाभावात्तत्पिशितस्याप्यभावः, पिशितं मांसमुच्यते, तदभावाच्च कुतस्तस्याशनं भक्षणं, असति

तस्मिन्निर्विषया तन्निवृत्तिः। एवमकालमरणाभावेन वधाभावाद्व-धनिवृत्तिरपीति। एतदेव समर्थयति

अज्झीणे पुव्वकए न मरइ झीणे य जीवइ न कोइ।
सयमेव ता कह वहो उवक्कमाओ वि नो जुत्तो॥१९३

[अक्षीणे पूर्वकृते न म्रियते क्षीणे च जीवति न कश्चित्।
स्वयमेव तत्कथं वधः उपक्रमादपि न युक्तः॥ १९३॥]

अक्षीणे पूर्वकृते आयुष्ककर्मणि न म्रियते कश्चित्, स्वकृत-कर्मफलं प्रत्युपभोगाभावप्रसङ्गात्, क्षीणे च तस्मिन् जीवति न कश्चित् अकृताभ्यागमकृतनाशप्रसङ्गात्, स्वयमेवात्मनैवैतदे-यमिति तत्तस्मात्कथं वधो निमित्ताभावात् नास्त्येवेत्यभिप्रायः। कर्मोपक्रमान्न विप्यतीत्येतदाशङ्क्याह उपक्रमादपि अपान्तराल एव तत्क्षयलक्षणान्न युक्त इति। अत्रैवोपपत्तिमाह

कम्मोवक्कामिज्जइ अपत्तकालं पि जइ तओ पत्ता।
अकयागमकयनासा मुक्खाणासासया दोसा॥१९४॥

[कर्मोपक्राम्यते अप्राप्तकालमपि यदि ततः प्राप्तौ।
अकृतागमकृतनाशौ मोक्षानाश्वासता दोषाः॥१९४॥]

कर्मोपक्राम्यते अर्धमार्ग एव क्षयमुपनीयतेऽप्राप्तकालमपि स्ववि-पाकापेक्षया यदि ततः प्राप्तावकृतागमकृतनाशौ अपान्तराल एव मरणादकृतागमः प्रभूतकालोपभोग्यस्यारत एव क्षयात्कृतनाशः मोक्षानाश्वासता अतः मोक्षेऽनाश्वासता अनाश्वासभावः मृत्युवत्

शरीरस्य वधे घाते एवमुक्तन्यायाज्जीवानुवेधसिद्धौ, तस्य जीवस्य वधो भवति ज्ञातव्य इति ।

अधुना वधलक्षणमेवाह

तप्पज्जायविणासो दुक्खुप्पाओ अ संकिलेसो य ।
एस वहो जिणभणिओ वज्जेयव्वो पयत्तेणं ॥१९१॥

[ तत्पर्यायविनाशः दुःखोत्पादश्च संक्लेशश्च ।
एष वधो जिनभणितः वर्जयितव्यः प्रयत्नेन ॥१९१॥]

तत्पर्यायविनाशः मनुष्यादिजीवपर्यायविनाशः, दुःखोत्पादश्च व्यापाद्यमानस्य, चित्तसंक्लेशश्च क्लिष्टचित्तोत्पादश्चात्मनः एष वधो व्यस्तः समस्तो वा ओघतो जिनभणितः तीर्थकरोक्तो वर्जयितव्यः प्रयत्नेनोपयोगसारेणानुष्ठानेनेति ॥

इदानीमन्यद्द्वादस्थानकम् ।

अन्ने अकालमरणस्सभावओ वहनिवित्तिमो मोहा
वंझासुअपिसियासणनिवित्तितुल्लं ववइसंति ॥१९२॥

[ अन्येऽकालमरणस्याभावात् वधनिवृत्तिर्मोहात् ।
वन्ध्यासुतपिशिताशननिवृत्तितुल्यां व्यपदिशन्ति ॥१९२॥]

अन्ये वादिनः स्वकृतकर्मफलं सम्युपभोगभावेन अकालमरणस्याभावाद्धननिवृत्तिमिच्छ मोहाद्धेतोर्वन्ध्यासुतपिशिताशननिवृत्तितुल्यां व्यपदिशन्ति। वन्ध्यासुतस्यैवाभावात्पिशितस्याप्यभावः, पिशितं मांसमुच्यते, तदभावाच्च तुल्ममशनादानं भक्षणं, अतएति

तस्मिन्निर्विषया तन्निवृत्तिः । एवमकालमरणाभावेन वधाभावाद्ध-धनिवृत्तिरपीति । एतदेव समर्थयति

अज्झीणे पुव्वकए न मरइ झीणे य जीवइ न कोइ ।
सयमेव ता कह वहो उवक्कमाओ वि नो जुत्तो१९३

[ अक्षीणे पूर्वकृते न म्रियते क्षीणे च जीवति न कश्चित् ।
स्वयमेव तत्कथं वधः उपक्रमादपि न युक्तः ॥ १९३ ॥]

अक्षीणे पूर्वकृते आयुष्ककर्मणि न म्रियते कश्चित्, स्वकृतकर्मफलं प्रत्युपभोगाभावप्रसङ्गात्, क्षीणे च तस्मिन् जीवति न कश्चित् अकृताभ्यागमकृतनाशप्रसङ्गात्, स्वयमेवात्मनैवैतदेवमिति तत्तस्मात्कथं वधो निमित्ताभावात् नास्त्येवेत्यभिप्रायः। कर्मोपक्रमाद्भविष्यतीत्येतदाशङ्क्याह उपक्रमादपि अपान्तराल एव तत्क्षयलक्षणान्न युक्त इति। अत्रैवोपपत्तिमाह

कम्मोवक्कामिज्जइ अपत्तकालं पि जइ तओ पत्ता ।
अकयागमकयनासा मुक्खाणासासया दोसा॥१९४॥

[ कर्मोपक्राम्यते अप्राप्तकालमपि यदि ततः प्राप्तौ ।
अकृतागमकृतनाशौ मोक्षानाश्वासता दोषाः॥१९४॥ ]

कर्मोपक्राम्यते अर्धमार्ग एव क्षयमुपनीयतेऽप्राप्तकालमपि स्वविपाकापेक्षया यदि ततः प्राप्तावकृतागमकृतनाशौ अपान्तराल एव मरणादकृतागमः प्रभूतकालोपभोग्यस्यारत एव क्षयात्कृतनाशः मोक्षानाश्वासता अतः मोक्षेऽनाश्वासता अनाश्वासभावः मृत्युवत्

अकृतस्यापि कर्मणो भावाशङ्कानिवृत्तेः कृतस्यापि च कर्मक्षयश्च (कर्मणःक्षयश्च!) नाशसंभवात् एत एव दोषा इति एष पूर्वपक्षः। अधुनोत्तरपक्षमाह

न हि दीहकालियस्स विनासो तस्साणुभूइओ खिप्पं
वहुकालाहारस्स व दुयमग्गियरोगिणो भोगो १९५

[न हि दीर्घकालिकस्यापि नाशः तस्यानुभूतितः क्षिप्रम्
बहुकालाहारस्येव द्रुतमग्निकरोगिणो भोगः ॥१९५॥]

न हि नैव दीर्घकालिकस्यापि प्रभूतकालवेद्यस्यापि उपक्रमतः स्वल्पकालवेदनेऽपि नाशस्तस्य कर्मणः अनुभूतितः क्षिप्रं समस्तस्यैव शीघ्रमनुभूतेः। अत्रैव निदर्शनमाह। बहुकालाहारस्येव सेतिकापलभोगेन वर्षशताहारस्येव द्रुतं शीघ्रमग्निकरोगिणो भस्मकव्याधिमतो भोगः स हि तमेकदिवसेनैव भुंक्ते व्याधिसामर्थ्यात् न च तत्र किंचिन्नश्यति संपूर्णभोगात् एवमुपक्रमकर्मभोगेऽपि योज्यमिति। एतदेवाह

सव्वं च पएसतया भुज्जइ कम्ममणुभावओ भइयं।
तेणावस्साणुभवे के कयनासादओ तस्स ॥१९६॥

[सर्वं च प्रदेशतया भुज्यते कर्म अनुभावतो भाज्यम्।
तेनावश्यानुभवे के कृतनाशादयः तस्य ॥ १९६ ॥]

सर्वं च प्रदेशतया कर्मप्रदेशविघटनक्षपणलक्षणया भुज्यते कर्म अनुभावतो भाज्यं विकल्पनीयं विपाकेन तु कदाचिद्भुज्यते

१ तस्स—इत्यधिकतरः।

कदाचिदेवेति क्षपकश्रेणिपरिणामादावन्यथापि भोगसिद्धेरन्यथा निर्मोक्षप्रसङ्गात् तेन कारणेन अपवर्त्यानुभवे प्रदेशतया नियमवेदने के कृतनाशादयः नैव कृतनाशादय इति । किं च

उदयक्खयखओवसमोवसमा जं च कम्मुणो भणिया।
दव्वाइपंचयं पइ जुत्तमुवक्कामणमओ वि ॥ १०७ ॥

[ उदयक्षयक्षयोपशमोपशमाः यच्च कर्मणो भणिताः ।
द्रव्यादिपंचकं प्रति युक्तमुपक्रामणमतोऽपि ॥ १०७ ॥]

उदयक्षयक्षयोपशमोपशमाः यच्च यस्मात्कारणात्कर्मणो भणितास्तीर्थकरगणधरैः द्रव्यादिपञ्चकं प्रति द्रव्यं क्षेत्रं कालं भवं भावं च प्रतीत्य यथा द्रव्यं माहिषं दधि क्षेत्रं जांगलं कालं प्रावृड्लक्षणं भवमेकेन्द्रियादिकं भावमौदयिकादिकमालस्यादिकं वा प्रतीत्योदयो निद्रावेदनीयस्य एवं क्षयादिना क्षयादियोजना कार्या युक्तमुपक्रामणमतोऽपि अनेन कारणेन कर्मण उपक्रमो युज्यत इति इत्थं चैतदङ्गीकर्तव्यम् । अन्यथेदमनिष्टमापद्यते इति दर्शयन्नाह ।

जइ याणुभूइओ च्चिय खविज्जए कम्म नन्नहाणुमयं ।
तेणासंखभवज्जियनाणागइकारणत्तणओ ॥ १०८ ॥

[ यदि चानुभूतित एव क्षप्यते कर्म नान्यथा अनुमतम् ।
तेनासंख्यभवार्जितनानागतिकारणत्वात् ॥ १०८ ॥]

यदि चानुभूतित एव विपाकानुभवेनैव क्षप्यते कर्म नान्यथानुमतमुपक्रमद्वारेण तेन प्रकारेणासंख्यभवार्जितनानागतिका-

अकृतस्यापि कर्मणो भावाशङ्कानिवृत्तेः कृतस्यापि च कर्मक्षयश्च (कर्मणःक्षयश्च!) नासमंभवात् एत एव दोषा इति एष पूर्वपक्षः। अधुनोत्तरपक्षमाह

न हि दीहकालियस्स वि नासो तस्साणुभूइओ खिप्पं
बहुकालाहारस्स व दुयमग्गियरोगिणो भोगो १९५

[ न हि दीर्घकालिकस्यापि नाशः तस्यानुभूतितः क्षिप्रम्
बहुकालाहारस्येव द्रुतमग्निकरोगिणो भोगः ॥१९५॥]

न हि नैव दीर्घकालिकस्यापि प्रभूतकालवेद्यस्यापि उपक्रमतः स्वल्पकालवेदनेऽपि नाशस्तस्य कर्मणः अनुभूतितः क्षिप्रं समस्तस्यैव शीघ्रमनुभूतेः। अत्रैव निदर्शनमाह। बहुकालाहारस्येव सेतिकापलभोगेन वर्षशताहारस्येव द्रुतं शीघ्रमग्निकरोगिणो भस्मकव्याधिमतो भोगः स हि तमेकदिवसेनैव भुंक्ते व्याधिसामर्थ्यात् न च तत्र किंचिन्नश्यति संपूर्णभोगात् एवमुपक्रमकर्मभोगेऽपि योज्यमिति। एतदेवाह

सव्वं च पएसतया भुज्जइ कम्ममणुभावओ भइयं।
तेणावस्साणुभवे के कयनासादओ तस्स ॥१९६॥

[ सर्वं च प्रदेशतया भुज्यते कर्म अनुभावतो भाज्यम्।
तेनावश्यानुभवे के कृतनाशादयः तस्य ॥ १९६ ॥]

सर्वं च प्रदेशतया कर्मप्रदेशविचटनक्षपणलक्षणया भुज्यते कर्म अनुभावतो भाज्यं विकल्पनीयं विपाकेन तु कदाचिद्भुज्यते

१ तस्य—हन्यमानस्य।

अकृतस्यापि कर्मणो भायाशङ्कानिवृत्तेः कृतस्यापि च कर्मक्षयश्च (कर्मणःक्षयश्च!) नाशसंभवाद् एत एव दोषा इति एष पूर्वपक्षः। अधुनोत्तरपक्षमाह

न हि दीहकालियस्स वि नासो तस्साणुभूइओ खिप्पं
वहुकालाहारस्स व दुयमग्गियरोगिणो भोगो १९५

[ न हि दीर्घकालिकस्यापि नाशः तस्यानुभूतितः क्षिप्रम्
वहुकालाहारस्येव द्रुतमग्निकरोगिणो भोगः ॥१९५॥]

न हि नैव दीर्घकालिकस्यापि प्रभूतकालवेद्यस्यापि उपक्रमतः स्वल्पकालवेदनेऽपि नाशस्तस्य कर्मणः अनुभूतितः क्षिप्रं समस्तस्यैव शीघ्रमनुभूतेः। अत्रैव निदर्शनमाह। बहुकालाहारस्येव सेतिकापलभोगेन वर्षशताहारस्येव द्रुतं शीघ्रमग्निकरोगिणो भस्मकव्याधिमतो भोगः स हि तमेकदिवसेनैव भुंक्ते व्याधिसामर्थ्यात् न च तत्र किंचिन्नश्यति संपूर्णभोगात् एवमुपक्रमकर्मभोगेऽपि योज्यमिति। एतदेवाह

सव्वं च पएसतया भुज्जइ कम्ममणुभावओ भइयं।
तेणावस्साणुभवे के कयनासादओ तस्स ॥१९६॥

[ सर्वं च प्रदेशतया भुज्यते कर्म अनुभावतो भाज्यम्।
तेनावश्यानुभवे के कृतनाशादयः तस्य ॥ १९६ ॥]

सर्वं च प्रदेशतया कर्मप्रदेशविघटनक्षपणलक्षणया भुज्यते कर्म अनुभावतो भाज्यं विकल्पनीयं विपाकेन तु कदाचिद्भुज्यते

१ तस्य—हन्यमानस्य।

कदाचिच्चेति क्षपकश्रेणिपरिणामादावन्यथापि भोगसिद्धेरन्यथा निर्मोक्षप्रसङ्गात् तेन कारणेन अवद्यानुभवं प्रदेशतया नियमवेदने के कृतनाशादयः नैव कृतनाशादय इति । किं च

उदयक्खयक्खओवसमोवसमा जं च कम्मुणो भणिया।
दव्वाइपंचयं पइ जुत्तमुवक्कामणमओ वि ॥ १०७ ॥

[ उदयक्षयक्षयोपशमोपशमाः यच्च कर्मणो भणिताः ।
द्रव्यादिपञ्चकं प्रति युक्तमुपक्रामणमतोऽपि ॥ १०७ ॥]

उदयक्षयक्षयोपशमोपशमाः यच्च यस्मात्कारणात्कर्मणो भणितास्तीर्थकरगणधरैः द्रव्यादिपञ्चकं प्रति द्रव्यं क्षेत्रं कालं भवं भावं च प्रतीत्य यथा द्रव्यं माहिषं दधि क्षेत्रं जांगलं कालं प्रावृड्लक्षणं भवमेकेन्द्रियादिकं भावमौदयादिकादिकमालस्यादिकं वा प्रतीत्योदयो निद्रावेदनीयस्य एवं व्यत्ययादिना क्षयादियोजना कार्या युक्तमुपक्रामणमतोऽपि अनेन कारणेन कर्मण उपक्रमो युज्यत इति हृदयं चैतदङ्गीकर्तव्यम् । अन्यथेदमनिष्टमापद्यते इति दर्शयन्नाह ।

जइ याणुभूइओ च्चिय खविज्जए कम्म नन्नहाणुमयं ।
तेणासंखभवज्जियनाणागइकारणत्तणओ ॥ १०८ ॥

[ यदि चानुभूतित एव क्षप्यते कर्म नान्यथा अनुमत-
:तेनासंख्यभवार्जितनानागतिकारणत्वात् ॥ १° ।]

यदि चानुभूतित एव विपाकानुभवेनैव क्षप्यते [illegible] न्यथा नुमतमुपक्रमद्वारेण तेन प्रकारेणासंख्येयभवा [illegible] नागति

अकृतस्यापि कर्मणो भावाशङ्कानिवृत्तेः कृतस्यापि च कर्मक्षयश्च (कर्मणःक्षयश्च!) नाशसंभवात् एत एव दोषा इति एष पूर्वपक्षः। अधुनोत्तरपक्षमाह

न हि दीहकालियस्स वि नासो तस्साणुभूइओ खिप्पं
बहुकालाहारस्स व दुयमग्गियरोगिणो भोगो १९५

[ न हि दीर्घकालिकस्यापि नाशः तस्यानुभूतितः क्षिप्रम्
बहुकालाहारस्येव द्रुतमग्निकरोगिणो भोगः ॥१९५॥]

न हि नैव दीर्घकालिकस्यापि प्रभूतकालवेद्यस्यापि उपक्रमतः स्वल्पकालवेदनेऽपि नाशस्तस्य कर्मणः अनुभूतितः क्षिप्रं समस्तस्यैव शीघ्रमनुभूतेः । अत्रैव निदर्शनमाह । बहुकालाहारस्येव अनेककालभोग्यस्य वर्षशताहारस्येव द्रुतं शीघ्रमग्निकरोगिणो भस्मकव्याधिमतो भोगः स हि तमेकदिवसेनैव भुंक्ते व्याधिसामर्थ्यात् न च तत्र किंचिन्नश्यति संपूर्णभोगात् एवमुपक्रमकर्मभोगेऽपि योज्यमिति । एतदेवाह

सव्वं च पएसतया भुज्जइ कम्ममणुभावओ भइयं ।
तेणावस्साणुभवे के कयनासादओ तस्स ॥१९६॥

[ सर्वं च प्रदेशतया भुज्यते कर्म अनुभावतो भाज्यम्।
तेनावश्यानुभवे के कृतनाशादयः तस्य ॥ १९६ ॥]

सर्वं च प्रदेशतया कर्मप्रदेशानुभवनलक्षणया भुज्यते कर्म अनुभावतो भाज्यं विकल्पनीयं विपाकेन तु कदाचिद्भुज्यते

१ [illegible]।

कदाचिदेवेति क्षपकश्रेणिपरिणामादावन्यथापि भोगसिद्धेरन्यथा निर्मोक्षप्रसङ्गात् तेन कारणेन अवश्यानुभवे प्रदेशतया नियमवेदने के कृतनाशादयः नैव कृतनाशादय इति । किं च

उदयक्खयक्खओवसमोवसमा जं च कम्मुणो भणिया।
दव्वाइपंचयं पइ जुत्तमुवक्कामणमओ वि ॥ १०७ ॥

[ उदयक्षयक्षयोपशमोपशमाः यच्च कर्मणो भणिताः ।
द्रव्यादिपंचकं प्रति युक्तमुपक्रामणमतोऽपि ॥ १०७ ॥]

उदयक्षयक्षयोपशमोपशमाः यच्च ज्ञानावरणादिकर्मणो भणिताः तीर्थकरगणधरैः द्रव्यादिपञ्चकं प्रति द्रव्यं क्षेत्रं कालं भवं भावं च प्रतीत्य यथा द्रव्यं माहिषं दधि क्षेत्रं जाङ्गलं कालं प्रावृड्लक्षणं भवमेकेन्द्रियादिकं भावमौदयिकादिकमालस्यादिकं वा प्रतीत्योदयो निद्रावेदनीयस्य एवं क्षयादिना क्षयादियोजना कार्या युक्तमुपक्रामणमतोऽपि अनेन कारणेन कर्मण उपक्रमो युज्यत इति इदं चैतदङ्गीकर्तव्यम् । अन्यथेदमनिष्टमापद्यत इति दर्शयन्नाह ।

जइ याणुभूइओ च्चिय खविज्जए कम्म नन्नहाणुमयं ।
तेणासंखभवज्जियनाणागइकारणत्तणओ ॥ १०८ ॥

[ यदि चानुभूतित एव क्षप्यते कर्म नान्यथा अनुमतम् ।
तेनासंख्यभवार्जितनानागतिकारणत्वात् ॥ १०८ ॥]

यदि चानुभूतित एव विपाकानुभवेनैव क्षप्यते [illegible] अन्यथा उपक्रमद्वारेण तेन प्रकारेणासङ्ख्येयभव [illegible] नानागति

जह वा दीहा रज्जू डज्झइ कालेण पुंजिया खिप्पं
वियओ पडो वि सूसइ पिण्डीभूओ उ कालेणं॥२०३॥

[ यथा वा दीर्घा रज्जुः दह्यते कालेन पुंजिता क्षिप्रम्।
विततः पटोऽपि शुष्यति पिंडीभूतस्तु कालेन॥२०३॥]

यथा वा दीर्घा रज्जुः पर्यन्तदीपिता सती तथा क्रमेणैव दह्यते कालेन प्रदीर्घेणेति भावः। पुञ्जिता क्षिप्रं शीघ्रमेव दह्यते। विततः पटो वा जलार्द्रोऽपि शुष्यति क्षिप्रमिति वर्तते पिण्डीभूतस्तु कालेन शुष्यति प्रदीर्घेणेति हृदयं न च तत्राधिकं जलमिति। अत्राह

नणु तं न जहोवचियं तहाणुभवओ कयागमाईया।
तप्पाओग्गं चिय तेण तं चियं सज्झरोगु व्व ॥२०४॥

[ ननु तत् न यथोपचितं तथानुभवतः अकृतागमादयः
तत्प्रायोग्यमेव तेन तच्चितं साध्यरोगवत् ॥२०४॥ ]

नन्वेवमपि तत्कर्म न यथोपचितं तथानुभवतः वर्षशतभोग्यतयोपचितं उपक्रमेणारादेवानुभवतोऽकृतागमादयस्तदवस्था एव। अत्रोत्तरमाह तत्प्रायोग्यमेवोपक्रमप्रायोग्यमेव तेन तच्चितं बद्धं किंवदित्याह साध्यरोगवत् साध्यरोगो हि मासादिवेद्योऽप्यौषधेरपान्तराल एवोपक्रम्यत इति। तथा चाह

अणुवक्कमओ नासइ कालेणोवक्कमेण खिप्पं पि।
कालेणेवासज्झो सज्झासज्झं तहा कम्मं ॥२०५॥

[ अनुपक्रमतः नश्यति कालेनोपक्रमेण क्षिप्रमपि।
कालेनैवासाध्यः साध्यासाध्यं तथा कर्म ॥२०५॥ ]

अनुपक्रमतः औषधोपक्रममन्तरेण नश्यत्यपैति कालेनात्मीयेनैव उपक्रमेण क्षिप्रमपि नश्यति साध्ये रोगे इयं स्थितिः कालेनैवासाध्य उभयमत्र न संभवति साधासाध्यं तथा कर्म साध्ये उभयं असाध्ये एक एव प्रकार इति। साध्यासाध्ययोरेव स्वरूपमाह

सोवक्कममिह सज्झं इयरमसज्झं ति होइ नायव्वं ।
सज्झासज्झविभागो एसो नेओ जिणाभिहिओ २०६

[सोपक्रममिह साध्यं इतरवदसाध्यमेव भवति ज्ञातव्यम्।
साध्यासाध्यविभागः एष ज्ञेयः जिनाभिहितः॥२०६॥]

सोपक्रममिह साध्यं तथाविधपरिणामजनितत्वात् इतरन्निरुपक्रममसाध्यमेव भवति ज्ञातव्यं साध्यासाध्यविभागः एष ज्ञेयो जिनाभिहितस्तीर्थकरोक्त इति । निगमयन्नाह

आउस्स उवक्कमणं सिद्धं जिणवयणओ य सद्धेयं ।
जं छउमत्थो सम्मं नो केवलिए मुणइ भावे ॥२०७॥

[आयुष उपक्रमणं सिद्धं जिनवचनाच्च श्रद्धेयम् ।
यच्छद्मस्थः सम्यग् न केवलिकान् जानाति भावान्॥२०७॥

आयुष उपक्रमणं सिद्धमुक्तान्यायात् जिनवचनाच्च भवति श्रद्धेयं किमित्यत्रोपपत्तिमाह यद्यस्माच्छद्मस्थः अर्वाग्दर्शी सम्यगशेषधर्मापेक्षया न केवलज्ञानगम्यान् मुणति भावान् जानाति पदार्थानिति । प्रकृतयोजनामाह

एयस्स य जो हेऊ सो वहओ तेण तव्विरिसी य ।
वंझासुयपिसियासणनिविसितुल्ला कहं होइ ॥२०८॥

जह वा दीहा रज्जू डज्झइ कालेण पुंजिया खिप्पं।
विअओ पडो वि सूसइ पिण्डीभूओ उ कालेणं॥२०३॥
[ यथा वा दीर्घा रज्जुः दह्यते कालेन पुंजिता क्षिप्रम्।
विततः पटोऽपि शुष्यति पिंडीभूतस्तु कालेन॥२०३॥]

यथा वा दीर्घा रज्जुः पर्यन्तदीपिता सती तथा क्रमेणैव दह्यते कालेन प्रदीर्घेणेति भावः। पुञ्जिता क्षिप्रं शीघ्रमेव दह्यते। विततः पटो वा जलार्द्रोऽपि शुष्यति क्षिप्रमिति वर्तते पिण्डीभूतस्तु कालेन शुष्यति प्रदीर्घेणेति हृदयं न च तत्राधिकं जलमिति। अत्राह

नणु तं न जहोवचियं तहाणुभवओ कयागमाईया।
तप्पाओग्गं चिय तेण तं चियं सज्झरोगु व्व ॥२०४॥
[ ननु तत् न यथोपचितं तथानुभवतः अकृतागमादयः।
तत्प्रायोग्यमेव तेन तच्चितं साध्यरोगवत् ॥२०४॥ ]

नन्वेवमपि तत्कर्म न यथोपचितं तथानुभवतः वर्षशतभोग्यतयोपचितं उपक्रमेणारादेवानुभवतोऽकृतागमादयस्तदवस्था एव। अत्रोत्तरमाह तत्प्रायोग्यमेवोपक्रमप्रायोग्यमेव तेन तच्चितं बद्धं किंचिदित्याह साध्यरोगवत् साध्यरोगो हि मासादिवेद्योऽप्यौषधैरपान्तराल एवोमक्रम्यत इति। तथा चाह

अणुवक्कमओ नासइ कालेणोवक्कमेण खिप्पं पि।
कालेणेवासज्झो सज्झासज्झं तहा कम्मं ॥२०५॥
[ अनुपक्रमतः नश्यति कालेनोपक्रमेण क्षिप्रमपि।
कालेनैवासाध्यः साध्यासाध्यं तथा कर्म ॥२०५॥ ]

अनुपक्रमतः औषधोपक्रममन्तरेण नश्यत्यपैति कालेनात्मीयेनैव उपक्रमेण क्षिप्रमपि नश्यति साध्ये रोगे इयं स्थितिः कालेनैवासाध्य उभयमत्र न संभवति साधासाध्यं तथा कर्म साध्ये उभयं असाध्ये एक एव प्रकार इति। साध्यासाध्ययोरेव स्वरूपमाह

सोवक्कममिह सज्झं इयरमसज्झं ति होइ नायव्वं।
सज्झासज्झविभागो एसो नेओ जिणाभिहिओ २०६

[ सोपक्रममिह साध्यं इतरवदसाध्यमेव भवति ज्ञातव्यम्।
साध्यासाध्यविभागः एष ज्ञेयः जिनाभिहितः॥२०६॥]

सोपक्रममिह साध्यं तथाविधपरिणामजनितत्वात् इतरन्निरुपक्रममसाध्यमेव भवति ज्ञातव्यं साध्यासाध्यविभागः एष ज्ञेयो जिनाभिहितस्तीर्थकरोक्त इति। निगमयन्नाह

आउस्स उवक्कमणं सिद्धं जिणवयणओ य सद्धेयं।
जं छउमत्थो सम्मं नो केवलिए मुणइ भावे॥२०७॥

[ आयुष उपक्रमणं सिद्धं जिनवचनाच्च श्रद्धेयम्।
यच्छद्मस्थः सम्यग् न केवलिकान् जानाति भावान्॥२०७॥

आयुष उपक्रमणं सिद्धमुक्तन्यायात् जिनवचनाच्च भवति श्रद्धेयं किमित्यत्रोपपत्तिमाह यद्यस्माच्छद्मस्थः अर्वाग्दर्शी सम्यगशेषधर्मापेक्षया न केवलज्ञानगम्यान् मुणति भावान् जानाति पदार्थानिति। प्रकृतयोजनामाह

एयस्स य जो हेऊ सो वहओ तेण तन्निवित्ती य।
वंझासुयपिसियासणनिविव्वित्तितुल्ला कहं होइ॥२०८॥

[ एतस्य च यो हेतुः स वधकः तेन तन्निवृत्तिरियं।
वंध्यासुतपिशिताशननिवृत्तितुल्या कथं भवति२०८]

एतस्य चोपक्रमस्य यो हेतुर्दण्डादिपीडाकरणेन स वधकः असौ हन्ता येन कारणेन तन्निवृत्तिः वधनिवृत्तिः एवं वंध्यासुतपिशिताशननिवृत्तितुल्या कथं भवति सविषयत्वाद्वधनिवृत्तेरिति ॥

अधुनान्यद्वादस्थानकम्

अन्ने भणंति कम्मं जं जेण कयं स भुंजइ तयं तु।
चित्तपरिणामरूवं अणेगसहकारिसाविक्खं ॥२०९॥

[ अन्ये भणन्ति कर्म यद्येन कृतं स भुंक्ते तदेव।
चित्रपरिणामरूपं अनेकसहकारिसापेक्षम् ॥ २०९ ॥]

अन्ये भणन्ति कर्म ज्ञानावरणादि यद्येन कृतं प्राणिना स भुंक्ते तदेव चित्रपरिणामरूपं कर्मानेकसहकारिसापेक्षं अस्मादिदं प्राप्तव्यमित्यादिरूपमिति।

तक्कयसहकारित्तं पवज्जमाणस्स को वहो तस्स।
तस्सेव तओ दोसो जं तह कम्मं कयमणेणं ॥ २१० ॥

[ तत्कृतसहकारित्वं प्रपद्यमानस्य को वधस्तस्य।
तस्यैव असौ दोषः यत्तथा कर्म कृतमनेन ॥ २१० ॥ ]

तत्कृतसहकारित्वं व्यापाद्यकृतसहकारित्वं प्रपद्यमानस्य को वधस्तस्य व्यापादकस्य तस्यैव व्यापाद्यस्यासौ दोषो यत्तथा कर्म अस्मान्मया मर्तव्यमिति विपाकरूपं कृतमनेन व्यापाद्येनेति। एतदेव समर्थयति।

जइ तेण तहा अकए तं वहइ तओ सतंतभावेण ।
अन्नं पि किं न एवं वहेइ अणिवारियप्पसरो ॥२११॥

[ यदि तेन तथा अकृते तं हन्ति ततः स्वतन्त्रभावेन ।
अन्यमपि किं न एवं हन्ति अनिवारितप्रसरः ॥२११॥]

यदि तेन व्यापाद्येन तथा तेन प्रकारेण अस्मान्सर्तव्यमित्यादिलक्षणेन अकृते अनुपात्ते कर्मणीति गम्यते तं व्यापाद्यं हन्ति व्यापादयति ततो वधकः स्वतन्त्रभावेन स्वयमेव कथंचित् । अत्र दोषमाह । अन्यमपि देवदत्तादिकं किं न एवं हन्ति यथा तं निमित्ताभावस्याविशेषात्[1] अनिवारितप्रसरः स्वातन्त्र्येण व्यापादनशील इति ।

न य सव्वो सव्वं चिय वहेइ निययस्सभावओ अह न ।
वज्झस्स अफलकम्मं वहगसहावेण मरणाओ २१२

[ न च सर्वः सर्वमेव हन्ति नियतस्वभावतः अथ न ।
वध्यस्याफलं कर्म वधकस्वभावेन मरणात् ॥ २१२ ॥ ]

न च सर्वो व्यापादकः सर्वमेव व्यापाद्यं हन्ति अदर्शनान्नियतस्वभावतो ऽथ न अर्थवं मन्यसे नियतहन्तृस्वभावात् न सर्वान्हन्तीत्येतदाशङ्क्याह । वध्यस्य व्यापाद्यस्याफलं कर्म कुतो वधकस्वभावेन मरणात् यो हि यद्व्यापादनस्वभावः स तं व्यापादयतीति निःफलं कर्मापद्यते न चैतदेवं तस्मात्तस्यैवासौ दोषो य-

1 प्रार्थनानिमित्तभावस्याविशेषात्

[ स्वकृतमपि अनेकविधं तेन प्रकारेण अभुक्त्वा सर्वं।
अपूर्वकरणयोगात् प्राप्नोति मोक्षं तु किं तेन ॥२१७॥]

किं च स्वकृतमप्यात्मोपात्तमप्यनेकविधं चतुर्गतिनिबंधनं तेन प्रकारेण चतुर्गतिवेद्यत्वेन अभुक्त्वा सर्वमननुभूय निरवशेषं अपूर्वकरणयोगात् क्षपकश्रेण्यारंभकादपूर्वकरणसंबन्धात्प्राप्नोति मोक्षमेवासादयति निर्वाणमेव किं तेन व्यापादकभावनिबंधनत्वपरिकल्पितेन कर्मणेति स्यात्तस्मिन् सति न चरणभाव एवेति अत्राह

परकयकम्मनिबंधा चरणाभावंमि पावइ अभावो।
सकयस्स निप्फलत्ता सुहदुहसंसारमुक्खाणं ॥२१८॥

[ परकृतकर्मनियन्धात् चरणाभावे प्राप्नोत्यभावः।
स्वकृतस्य निष्फलत्वं सुखदुःखसंसारमोक्षाणाम् २१८]

परकृतकर्मनिबंधाद्व्यापाद्यकृतकर्मनिबंधनेन व्यापादकस्य चरणाभावे अभ्युपगम्यमाने प्राप्नोत्यभावः सुखदुःखसंसारमोक्षाणामिति योगः कुतः स्वकृतस्य निःफलत्वान्निःफलत्वं चान्यकृतेन प्रतिबंधादिति।

अकयागमकयनासा सपरेगत्तं च पावई एवं।
तच्चरणाउ चिय तओ खओ वि अणियारियप्पसरो२१९

[ अकृतागमकृतनाशौ स्वपरैकत्वं च प्राप्नोत्येवम्।
तच्चरणतः एव ततः क्षयो ऽपि अनिवारितप्रसरः२१९]

अकृतागमकृतनाशौ तेनाकृतमपि तस्य प्रतिबंधकमित्यकृता-

गमः शुभपरिणामभावेऽपि च ततः प्रतिबंधात्तत्फलमिति कृत
नाशः स्वपरकत्वं च प्रतिबंधकाविशेषात् प्राप्नोत्येवं तच्चरणत ए
ततः क्षयोऽप्यनिवारितप्रसरस्तस्येत्युपसंहरन्नाह ॥

एवंपि य वहविरई कायव्वा चेव सव्वजत्तेणं ।
तदभावंमि पमाया बंधो भणिओ जिणिंदेहिं ॥ २२०॥

[ एवमपि च वधविरतिः कर्तव्या एव सर्वयत्नेन ।
तदभावे प्रमादात् बन्धो भणितः जिनेन्द्रैः ॥२२०॥

एवमपि चोक्तप्रकाराद्वधविरतिः कर्तव्यैव सर्वयत्नेनाप्रमादेनेत्यर्थः
तदभावे च विरत्यभावे च प्रमादाद्बन्धो भणितो जिनेन्द्रैरिति

इदानीमन्यवादस्थानकम्

केइ बालाइवहे बहुतरकम्मस्सुवक्कमाउ त्ति ।
मन्नंति पावमहियं वुड्ढाईसुं विवज्जासं ॥ २२१ ॥

[ केचित् बालादिवधे बहुतरकर्मण उपक्रमादेव ।
मन्यन्ते पापमधिकं वृद्धादिषु विपर्यासम् ॥ २२१ ॥ ]

केचिद्वादिनो बालादिवधे बालकुमारयुवव्यापादने बहुतरक
र्मण उपक्रमणात्कारणान्मन्यन्ते पापमधिकं । वृद्धादिषु विपर्यासं
स्तोकतरस्य कर्मण उपक्रमादिति । अत्रोत्तरमाह

एयं पि न जुत्तिखमं जं परिणामाउ पावमिह वुत्तं ।
दव्वाइभेयभिन्ना तह हिंसा वन्निया समए ॥ २२२ ।

[ एतदपि न युक्तिक्षमं यत्परिणामात्पापमिहोक्तम् ।
द्रव्यादिभेदभिन्ना तथा हिंसा वर्णिता समये ॥२२२॥ ]

एतदपि न युक्तिक्षमं यद्यस्मात्परिणामात्पापमिहोक्तं स च न नियतो बालवृद्धादिषु क्लिष्टेतररूपो द्रव्यादिभेदभिन्ना तथा हिंसा वर्णिता समये यथोक्तं "दव्वउ णामेगे हिंसा ण भावउ" इत्यादि प्रथमहिंसाभेदमाह ।

उच्चालियंमि पाए इरियासमियस्स संकमट्ठाए।
वावज्जिज्ज कुलिंगी मरिज्ज तं जोगमासज्ज ॥ २२३॥

[ उच्चालिते पादे ईर्यासमितस्य संक्रमार्थम् ।
व्यापद्येत कुलिङ्गी म्रियेत तं योगमासाद्य ॥ २२३ ॥]

उच्चालिते उत्क्षिप्ते पादे संक्रमार्थं गमनार्थमिति योगः ईर्यासमितस्योपयुक्तस्य साधोः किं व्यापद्येत महतीं वेदनां प्राप्नुयात् म्रियेत प्राणत्यागं कुर्यात् कुलिङ्गी कुत्सितलिङ्गवान् द्वीन्द्रियादिसत्त्वः तं योगमासाद्य तथोपयुक्तसाधुव्यापारं प्राप्येति॥

न य तस्स तन्निमित्तो बंधो सुहुमो वि देसिओ समए।
जम्हा सो अपमत्तो सा उ पमाउ त्ति निद्दिट्ठा॥२२४॥

[ न च तस्य तन्निमित्तः बन्धः सूक्ष्मोऽपि देशितः समये।
यस्मात्सोऽप्रमत्तः सा च प्रमाद इति निर्दिष्टा २२४ ]

न च तस्य साधोस्तन्निमित्तः कुलिङ्गिव्यापत्तिकारणो बन्धः सूक्ष्मोऽपि देशितः समये किमिति यस्मात्सोऽप्रमत्तः सूत्राज्ञया प्रवृत्तः सा च हिंसा प्रमाद इत्येयं निर्दिष्टा तीर्थकरगणधरैरिति इयं द्रव्यतो हिंसा न भावतः। सांप्रतं भावतो न द्रव्यत इत्युच्यते॥

मंदपगासे देसे रज्जुं किह्नाहिसरिसयं दहुं।
अञ्छित्तु तिक्खखग्गं वहिज्ज तं तप्परीणामो॥२२५॥
[ मन्दप्रकाशे देशे रज्जुं कृष्णाहिसदृशीं दृष्ट्वा।
आकृष्य तीक्ष्णखड्गं हन्यात् तां तत्परिणामः॥२२५॥ ]
मन्दप्रकाशे देशे श्यामले निम्नादौ रज्जुं दर्भादिविकाररूपां कृष्णाहिसदृशीं कृष्णसर्पतुल्यां दृष्ट्वा आकृष्य तीक्ष्णखड्गं वधेत्तां हन्यादित्यर्थः तत्परिणामो वधपरिणाम इति ॥

सप्पवहाभावंमि वि वहपरिणामाउ चेव एयस्स।
नियमेण संपराइयबंधो खलु होइ नायव्वो ॥२२६॥
[ सर्पवधाभावेऽपि वधपरिणामादेवैतस्य।
नियमेन सांपरायिको बन्धः खलु भवति ज्ञातव्यः २२६]
सर्पवधाभावेऽपि तत्त्वतः वधपरिणामादेवैतस्य व्यापादकस्य नियमेन सांपरायिको बन्धो भवपरंपराहेतुः कर्मयोगः खलु भवति ज्ञातव्य इति। तृतीयं हिंसाभेदमाह ॥

मिगवहपरिणामगओ आयण्णं कड्डिऊण कोदंडं।
मुत्तूण मिसुं उभओ वहिज्ज तं पागडो एस॥२२७॥
[ मृगवधपरिणामगतः आकर्णं आकृष्य कोदण्डम्।
मुक्त्वा इषुं उभयतः हन्यात् तं प्रकट एषः ॥ २२७ ॥ ]
मृगवधपरिणामपरिणतः सन्नाकर्णमाकृष्य कोदण्डं धनुर्मुक्त्वेषुं बाणं उभयतो वधेत् हन्यात् द्रव्यतो भावतश्च तं मृगं प्रकट एव हिंसक इति। चतुर्थं भेदमाह

उभयाभावे हिंसा धणिमित्तं भंगयाणुपुव्वीए ।
तहवि य दंसिज्जंती सीसमइविगोवणमदुट्ठा ॥ २२८ ॥

[ उभयाभावे हिंसा ध्वनिमात्रं भंगकानुपूर्व्या ।
तथापि च दर्श्यमाना शिष्यमतिविकोपनाय अदुष्टा२२८]

उभयाभावे द्रव्यतो भावतश्च वधाभावे हिंसा ध्वनिमात्रं न विषयतः भङ्गकानुपूर्व्यायाता तथापि च दर्श्यमाना शिष्यमतिविकोपनं विनेयबुद्धिविकाशायादुष्टेवेति ।

इय परिणामा बंधे बालो वुड्ढत्ति थोवमियमित्थ ।
बाले वि सो न तिव्वो कयाइ वुड्ढे वि तिव्वुत्ति ॥२२९॥

[ एवं परिणामाद्बन्धे बालो वृद्ध इति स्तोकमिदमत्र ।
बाले ऽपि असौ न तीव्रः कदाचिद् वृद्धे ऽपि तीव्र इति२२९

इय एवं परिणामाद्बन्धे सति बालो वृद्ध इति स्तोकमिदमत्र हिंसाप्रक्रमे किमिति बालेप्यसौ न तीव्रः परिणामः कदाचिद्वृद्धे ऽपि तीव्र इति जिघांसतामाशयवैचित्र्यादिति ।

अह परिणामाभावे वहे वि बंधो न पावई एवं ।
कह न वहे परिणामो तब्भावे कह य नो बंधो॥२३०॥

[ अथ परिणामाभावे वधेऽपि बंधो न प्राप्नोत्येवम् ।
कथं न वधे परिणामः तद्भावे कथं च न बन्धः ॥२३०॥]

अथैवं मन्यसे परिणामाभावे सति वधेऽप्यबंध एव प्राप्नोत्येवं परिणामवादे एतदाशङ्कयाह कथं न वधे परिणामः किं तर्हि

भवत्येवादुष्टाशयस्य तत्राप्रवृत्तेः तद्भावे वधपरिणामभावे कथं च वधे न बन्धो बन्ध एवेति ॥

सिय न वहे परिणामो अन्नाणकुसत्थभावणाओ य।
उभयत्थ तदेव तओ किलिट्ठबंधस्स हेउ त्ति॥२३१॥

[ स्याच्च वधे परिणामः अज्ञानकुशास्त्रभावनातश्च।
उभयत्र तदेव ततः क्लिष्टबन्धस्य हेतुरिति ॥ २३१ ॥ ]

स्याच्च वधे परिणामः क्लिष्टः अज्ञानात् अज्ञानं व्यापादयतः कुशास्त्रभावनातश्च यागादावेतदाशङ्क्याह । उभयत्र तदेवाज्ञानमसौ परिणामः क्लिष्टबन्धस्य हेतुरिति सांपरायिकस्येति ॥

जम्हा सो परिणामो अन्नाणादवगमेण नो होइ।
तम्हा तयभावत्थी नाणाईसुं सइ जइज्जा ॥२३२॥

[ यस्मादसौ परिणामः अज्ञानाद्यपगमेन न भवति।
तस्मात्तदभावार्थी ज्ञानादिषु सदा यतेत ॥ २३२ ॥ ]

यस्मादसौ वधपरिणामो अज्ञानाद्यपगमेन हेतुना न भवति सति। त्वज्ञानादौ भवत्येव वस्तुतत्त्वस्यैव तद्रूपत्वात्तस्मात्तदभावार्थी वधपरिणामाभावार्थी ज्ञानादिषु सदा यतेत तत्प्रतिपक्षत्वात् इति एवं वस्तुस्थितिमभिधायाधुना परोपन्यस्तहेतोरनैकान्तिकत्वमुद्भावयति ।

बहुतरकम्मोवक्कमभावो वेगंतिओ न जं केइ।
बाला वि य थोवाऊ हवंति वुड्ढा वि दीहाऊ॥२३३॥

कृत्वा अदुष्टा तद्वधनिवृत्तिः अन्तःकरणादिसंभवालंबनत्वाच्चेति वक्ष्यतीति ॥

आवडियाकरणं पि हु न अप्पमायाओ नियमओ अन्नं।
अन्नत्ते तब्भावे वि हंत विहला तई होइ ॥ २४४॥
[आपतिताकरणमपि नैवाप्रमादान्नियमतो ऽन्यत्।
अन्यत्वे तद्भावे ऽपि हन्त विफला तका भवति॥२४४॥]

आपतिताकरणमपि पूर्वपक्षवाद्युपन्यस्तं नाप्रमादान्नियमतो ऽन्यत् अपि त्वप्रमाद एव तदिति। अन्यत्वे ऽप्रमादादर्थान्तरत्वे आपतिताकरणस्य तद्भावे ऽप्यप्रमादभावे ऽपि हंत विफलासौ निवृत्तिर्भवति इष्यते चाविप्रतिपत्त्या अप्रमत्ततायां फलमिति ॥

अह परपीडाकरणे ईसिंवहसत्तिविप्फुरणभावे ।
जो तीइ निरोहो खलु आवडियाकरणमेयं तु ॥२४५॥
[अथ परपीडाकरणे ईषद्वधशक्तिविस्फुरणभावे।
यः तस्याः निरोधः खलु आपतिताकरणमेतदेव॥२४५॥]

अथैवं मन्येत परः परपीडाकरणे व्यापाद्यपीडासंपादने सति ईषद्वधशक्तिविस्फुरणभावे व्यापादकस्य मनाग्वधसामर्थ्यविजृंभणसत्तायां सत्यां यस्तस्याः शक्तेर्निरोधो दुष्करतर आपतिताकरणमेतदेवेति एतदाशङ्क्याह ॥

विहिउत्तरमेवेयं अणेण सत्ती उ कज्जगम्मत्ति ।
विप्फुरणं पि हु तीए बुहाण नो बहुमयं लोए॥२४६॥

[ विहितोत्तरमेवेदं अनेन शक्तिस्तु कार्यगम्येति ।
विस्फुरणमपि तस्याः एव बुधानां न बहुमतं लोके॥२४६॥]

विहितोत्तरमेवेदं केनेति अत्राह अनेन शक्तिस्तु कार्यगम्येति (२४२)विस्फुरणमपि तस्याः शक्तेर्बुधानां न बहुमतं लोके मरणाभावे ऽपि परपीडाकरणे बन्धादिति॥

एवं च जानिवित्ती सा चेव वहो ऽहवावि वहहेऊ ।
विसओ वि सु च्चिय फुडं अणुबंधा होइ नायव्वा २४७

[ एवं च या अनिवृत्तिः सैव वधो ऽथवापि वधहेतुः ।
विषयो ऽपि सैव स्फुटं अनुबन्धात् भवति ज्ञातव्या२४७

एवं च व्यवस्थिते सति, या अनिवृत्तिः सैव वधो निश्चयतः प्रमादरूपत्वात्,अथवापि वधहेतुरनिवृत्तितो वधप्रवृत्तेः विषयो ऽपि वस्तुतो गोचरो ऽपि सैवानिवृत्तिर्वधस्य स्फुटं व्यक्तं अनुबंधात्प्रवृत्त्यध्यवसायानुपरमलक्षणाद्भवति ज्ञातव्या अस्या एव वधसाधकत्वप्राधान्यख्यापनार्थं हेतुविषयाभिधानमदुष्टमेवेति। अमुमेवार्थं समर्थयन्नाह

हिंसाइपावगाओ अप्पडिविरयस्स अत्थि अणुबंधो ।
अत्तो अणिवत्तीओ फुलाइयेरं व नियमेण ॥ २४८ ॥

[ हिंसादिपापकात् अप्रतिविरतस्य अस्त्यनुबन्धः ।
अतः अनिवृत्तेः कुल्यादिवेरवत् नियमेन ॥ २४८ ॥ ]

हिंसादिपातकादादिशब्दात् मृषावादादिपरिग्रहः अप्रतिविरतस्यानिवृत्तस्यास्त्यनुबन्धः प्रवृत्त्यध्यवसायानुपरमलक्षणः यत-

त्तिमाद अत एवानिवृत्तेः प्रवृत्तेः कुलादिवैरवन्नियमेनावश्यं भवेति । दृष्टान्तं व्याचिख्यासुराह ॥

जेसि मिहो कुलवेरं अप्पडिविरईउ तेसिमन्नोन्नं ।
वहकिरियाभावंमि वि न तं सयं चेव उवसमइ ॥ २४९ ॥

[ येषां मिथः कुलवैरं अप्रतिविरतेः तेषामन्योऽन्यम् ।
वधक्रियाभावेऽपि न तत्स्वयमेवोपशाम्यति ॥ २४९ ॥]

येषां पुरुषाणां मिथः परस्परं कुलवैरमन्वयागतं अप्रतिविरतेः कारणात्तेषां अन्योन्यं परस्परं वधक्रियाभावेऽपि सति न तत्स्वयमेवोपशाम्यति किं तूपशामितं सदिति

तत्तो य तन्निमित्तं इह बंधणमाइ जह तहा बंधो ।
सव्वेसु नाभिसंधी जह तेसुं तस्स तो नत्थि ॥ २५० ॥

[ ततश्च तन्निमित्तं इह बन्धनादि यथा तथा बन्धः ।
सर्वेषु न अभिसंधिः यथा तेषु तस्य ततो नास्ति ॥ २५० ॥]

ततश्च तस्मादनुपशान्तात्तन्निमित्तं वैरनिबन्धनमिह बन्धनादि बन्धवधादि यथा भवति तेषां, तथैतरेषामनिवृत्तानां तन्निबन्धनो बन्ध इति अथाह सर्वेषु प्राणिषु नाभिसंधिर्व्यापादनपरिणामो यथा तेषु कुलवैरिषु वैरवत इति तस्य प्रत्याख्यातुस्ततो नास्ति बन्धः इति तथाहि ते ऽपि न यथादर्शनमेव प्राणिनो वैरं कुर्वन्ति किंतु वैरिप्रतिनियतानामेव एवं प्रत्याख्यातुरपि न सर्वेषु अभिसंधिरिति तद्विषये बन्धाभाव इति । एतदाशंक्याह

अत्थि चिय अभिसंधी अविसेसपवित्तिओ जहा तेसु।
अपवित्ती य विणिवित्तीजो उ तेसिं व दोसो उ ॥२५१॥

[ अस्त्येवाभिसंधिरविशेषप्रवृत्तितः यथा तेषु ।
अप्रवृत्तावपि अनिवृत्तिज एव तेषां दोष एव॥२५१॥]

अस्त्येवाभिसंधिरनन्तरोदितलक्षणः सर्वेषु कुतो ऽविशेषप्रवृत्तितः सामान्येन वधप्रवृत्तेः यथा तेषु रिपुदुर्गनिवासिषु वैरवतः ततश्चाप्रवृत्तावपि वधे अनिवृत्तिज एव तेषामिव वैरवतां दोष एवमनिवृत्तस्य गर्भार्थो भावित एवेति अदृष्टान्त एवायं सर्वसत्वैर्वैरासंभवादिति आशङ्क्याह

सव्वेसि विराहणओ परिभोगाओ य हंत वेराई ।
सिद्धा अणाइनिहणो जं संसारो विचित्तो य ॥२५२॥

[ सर्वेषां विराधनात् परिभोगाच हन्त वैरादयः ।
सिद्धाः अनादिनिधनो यत् संसारो विचित्रश्च॥२५२॥]

सर्वेषां प्राणिनां विराधनात्तेन तेन प्रकारेण परिभोगाच स्वच्छन्दोपकरणत्वेन हन्त वैरादयः सिद्धाः हंत संप्रेषणे स्थानान्तरगमने सति वैरोन्माथकादयः कूटपञ्चकादयः प्रतिष्ठिताः सर्वसत्त्वविषया इति । उपपत्त्यन्तरमाह । अनादिनिधनो यत्संसारो विचित्रश्चातो युज्यते सर्वमेतदिति उपसंहरन्नाह ।

ता बंधमणिच्छंतो कुज्जा सावज्जजोगविनिवित्तिं ।
अविसयअनिवित्तीए सुहभावा दढमई सम्मं॥२५३॥

[तस्मात् बन्धमनिच्छन् कुर्यात् सावद्ययोगनिवृत्तिम्।
अविषयानिवृत्त्या अशुभभावात् दृढतरं स भवेत्॥२५३॥]

यस्मादेवं तस्माद्बन्धमनिच्छन्नात्मनः कर्मणां कुर्यात्सावद्ययोगविनिवृत्तिमोघतः सपापव्यापारनिवृत्तिमित्यर्थः अविषयानिवृत्त्या नारकादिवधाभावे ऽपि तदनिवृत्त्या अशुभभावादविषये पि वधविरतिं न करोतीत्यशुभो भावस्तस्मात् दृढतरं सुतरां स भवेद्बन्धो भावप्रधानत्वात्तस्येति

इत्तो य इमा जुत्ता जोगतिगनिबंधणा पवित्तीओ।
जं ता इमीइ विसओ सव्वु चिय होइ विन्नेओ॥२५४॥

[इतश्चेयं युक्ता योगत्रिकनिबंधना प्रवृत्तिः।
यद् अस्याः विषयः सर्व एव भवति विज्ञेयः॥२५४॥]

इतश्चेयं निवृत्तिर्युक्ता योगत्रिकनिबन्धना मनोवाक्काययोगपूर्विका प्रवृत्तिर्यद्यस्मादस्या अनिवृत्तेर्विषयः सर्व एव भवति विज्ञेयः पाठान्तरं योगत्रिकनिबन्धना निवृत्तिर्यस्मात्संगतार्थमेवेति तथा चाह।

किं चिंतेइ न मणसा किं वायाए न जंपए पावं।
न य इत्तो वि न बंधो ता विरई सव्वहा कुज्जा २५५

[किं चिन्तयति न मनसा किं वाचा न जल्पति पापम्।
न चेतो ऽपि न बन्धः तस्माद्विरतिं सर्वथा कुर्यात्२५५]

किं चिन्तयति न मनसा अनिरुद्धत्वात्सर्वत्राप्रतिहतत्वात् तस्य किं वाचा न जल्पति पापं तस्या अपि प्रायोऽनिरुद्धत्वादिति न

अणट्ठाए तहेव णिरवेक्खो हत्थपायकन्नहोट्ठणकाइ निद्दयाए छिंदइ सावेक्खो गंडं वा अरइयं वा छिंदेज्ज वा दहेज्ज वा। अइभारो ण आरोवेयव्वो, पुव्विं चेव जा वाहणाए जीविया सा मुत्तव्वा न होज्ज अन्ना जीविया ताहे दुपदो जं सयं चेव उक्खिवइ उत्तारेइ वा भारं एवं वहाविज्जइ बइल्लाणं जहा साभावियाओ वि भाराओ ऊणओ कीरइ हलसगडेसु वि वेलाए चेव मुंचइ आसहत्थीसु वि एस चेव विही। भत्तपाणओच्छेओ ण कस्सइ कायव्वो तिक्खच्छुहो मा मरेज्ज तहेव अणट्ठाए दोसा परिहरेज्जा सावेक्खो पुण रोगनिमित्तं वा वायाए वा भणेज्जा अज्जं ण ते देमित्ति संतिणिमित्तं वा उववासं कारावेज्जा सव्वत्थ वि जयणा जहा थूलगपाणाइवायस्स अइयारो न भवइ तहा पइयव्वंति ॥ आह च

परिसुद्धजलग्गहणं दारुयधन्नाइयाण तह चेव ।
गहियाण वि परिभोगो विहीइ तसरक्खणट्ठाए २५९

[परिशुद्धजलग्रहणं दारुधान्यादीनां तथैव च ।
गृहीतानामपि परिभोगो विधिना त्रसरक्षणार्थम् २५९]

परिशुद्धजलग्रहणं वस्त्रपूतत्रसरहितजलग्रहणमित्यर्थः दारुधान्यादीनां च तथैव परिशुद्धानां ग्रहणं अनीलाजीर्णानां दारूणां अकीटविशुद्धस्य धान्यस्य आदिशब्दात्तथाविधोपस्करपरिग्रहः। गृहीतानामपि परिभोगो विधिना कर्तव्यः परिमितप्रत्युपेक्षिताक्रमेयं त्रसरक्षणार्थं द्वीन्द्रियादिपालनार्थमिति ॥

उक्तं सातिचारं प्रथमाणुव्रतम् अधुना द्वितीयमुच्यते।

थूलमुसावायस्स उ विरई दुच्चं स पंचहा होइ।
कन्नागोभुआलियनासहरणकूडसक्खिज्जे ॥२६०॥

[स्थूलमृषावादस्य तु विरतिः द्वितीयं स पञ्चधा भवति।
कन्यागोभूम्यनृतन्यासहरणकूटसाक्षित्वानि ॥२६०॥]

स्थूलमृषावादस्य तु विरतिर्द्वितीयमणुव्रतमिति गम्यते। मृषावादो हि द्विविधः स्थूलः सूक्ष्मश्च। तत्र परिस्थूलवस्तुविषयोऽतिदुष्टविवक्षासमुद्भवः स्थूलो विपरीतस्त्वितरो न च सेनेहाधिकारः श्रावकधर्माधिकारत्वात्स्थूलस्यैव प्रक्रान्तत्वात्। तथा चाह। स पञ्चधा भवति स स्थूलो मृषावादः पञ्चप्रकारो भवति। कन्यागोभूम्यनृतन्यासहरणकूटसाक्षित्वानि। अनृतशब्दः पदत्रये प्रत्येकमभिसंबध्यते। तद्यथा। कन्यानृतमित्यादि तत्र कन्याविषयमनृतं कन्यानृतं अभिन्नकन्यकामेव भिन्नकन्यकां वक्ति विपर्ययो वा। एवं गवानृतं अल्पक्षीरामेव बहुक्षीरां वक्ति विपर्ययो वा। एवं भूम्यनृतं परसत्कामेवात्मसत्कां वक्ति व्यवहारे वा नियुक्तो ऽनाभवद्व्यवहारेणैव कस्यचिद्रागाद्यभिभूतो वक्ति अस्येयमाभवतीति। न्यस्यते निक्षिप्यत इति न्यासो रूपकाद्यर्पणं तस्यापहरणं न्यासापहारः अदत्तादानरूपत्वादस्य कथं मृषावादत्वमिति उच्यते अपलपतो मृषावाद इति। कूटसाक्षिकं उत्कोचमत्सराद्यभिभूतः प्रमाणीकृतः सन् कूटं वक्तीति

वज्जणमिह पुत्तं आह कुमाराइगोयरो कह णु।
एयग्गहणाउ च्चिय गहिओ नणु सो वि दिट्ठव्वो २६१

दत्तादानं अचित्तादत्तादानं च। तत्र द्विपदादेर्वस्तुनः क्षेत्रादौ सुन्यस्तदुर्न्यस्तविस्मृतस्य स्वामिना अदत्तस्य चौर्यबुद्ध्या ग्रहणं सचित्तादत्तादानं तथा वस्त्रकनकादेरचित्तादत्तादानमिति।

भेएण लवणघोडगसुवन्नरुप्पाइयं अणेगविहं।
वज्जणमिमस्स सम्मं पुवुत्तेणेव विहिणा उ ॥२६६॥
[ भेदेन लवणघोटकरूप्यसुवर्णाद्यनेकविधम्।
वर्जनमस्य सम्यक् पूर्वोक्तेनैव विधिना ॥ २६६ ॥ ]

भेदेन विशेषेणादत्तादानं लवणघोटकरूप्यसुवर्णाद्यनेकविधमनेकप्रकारं लवणघोटकग्रहणात्सचित्तपरिग्रहः रूप्यसुवर्णग्रहणादचित्तपरिग्रह इति वर्जनमस्यादत्तादानस्य सम्यक् पूर्वोक्तेन विधिना उपयुक्तो गुरुमूले (१०८) इत्यादिनेति।

पडिवज्जिऊण य वयं तस्सइयारे जहाविहिं नाउं।
संपुन्नपालणट्ठा परिहरियव्वा पयत्तेणं ॥ २६७ ॥
पूर्ववत् (२५७), अतिचारानाह।

वज्जिज्जा तेनाहडतक्करजोगं विरुद्धरज्जं च।
कूडतुलकूडमाणं तप्पडिरूवं च ववहारं ॥ २६८ ॥
[ वर्जयेत् स्तेनाहृतं तस्करप्रयोगं विरुद्धराज्यं च।
कूटतुलाकूटमाने तत्प्रतिरूपं च व्यवहारम् ॥ २६८ ॥

वर्जयेत् स्तेनाहृतं स्तेनाश्चौरास्तैराहृतमानीतं किंचित्कुंकुमादि देशान्तरात् तत्समर्थमिति लोभान्न गृह्णीयात्।१।तथा तस्करप्रयोगं तस्कराश्चौरास्तेषां प्रयोगो हरणक्रियायां प्रेरणमभ्यनुज्ञा हरत यु-

यमिति तस्करप्रयोगः एनं च वर्जयेत्।२।विरुद्धराज्यमिति च सूचनाद्विरुद्धराज्यातिक्रमं च वर्जयेत् विरुद्धनृपयो राज्यं विरुद्धराज्यं तत्रातिक्रमो न हि साम्यां तत्र तदागमनमनुज्ञातमिति।३। तथा कूटतुलाकूटमाने तुला प्रतीता मानं कुडवादि कूटत्वं न्यूनाधिकत्वं न्यूनया ददाति अधिकया गृह्णाति।४। तथा तत्प्रतिरूपव्यवहरणं तेनाधिकृतेन प्रतिरूपं सदृशं तत्प्रतिरूपं तेन व्यवहरणं यद्यत्र घटते व्रीह्यादिघृतादिषु पलञ्जीवसादि तस्य तत्र प्रक्षेपेण विक्रयस्तं च वर्जयेत्।५।यत एतानि समाचरन्नतिचरति तृतीयाणुव्रतमिति

उचियं मुत्तूण कलं दव्वाइकमागयं च उक्करिसं।
निवडियमवि जाणंतो परस्स संतं न गिन्हिज्जा २६९

[उचितां मुक्त्वा कलां द्रव्यादिक्रमायातं चोत्कर्षम्।
निपतितमपि जानानः परस्य सत्कं न गृह्णीयात् २६९]

उचितां मुक्त्वा कलां पञ्चकशतवृद्ध्यादिलक्षणां। द्रव्यादिक्रमायातं चोत्कर्षं यदि कथंचित्पूगफलादेः क्रयः संवृत्त इत्यष्टगुणो लाभकः अक्रूराभिसंधिना ग्राह्य एवेत्यर्थः आदिशब्दः स्वभेदप्रख्यापकः। तथा निपतितमपि जानानः परस्य सत्कं न गृह्णीयात् प्रयोजनान्तरं चोद्दिश्य समर्पिते प्रतिशुष्यतीत्यादि गृहीत्वा प्रत्यर्पयेदपीति॥

उक्तं तृतीयाणुव्रतं सांप्रतं चतुर्थमाह।

परदारपरिच्चाओ सदारसंतोस मो वि य चउत्थं।
दुविहं परदारं खलु उरालवेउव्विभेएणं॥ २७०॥

[ परदारपरित्यागः स्वदारसंतोषोऽपि च चतुर्थम् ।
द्विविधं परदारं ज्ञातव्यं औदारिकवैक्रियभेदेन ॥२७०॥ ]

परदारपरित्यागः परकलत्रपरिहारः न वेश्यापरित्यागः स्वदारसंतोषश्च स्वकलत्रसेवनमेव न वेश्यागमनमपि चतुर्थमिदमणुव्रतं । परदारमपि द्विविधमौदारिकवैक्रियभेदेन औदारिकं स्त्र्यादिषु वैक्रियं विद्याधर्यादिष्विति ॥

वज्जणमिह पुव्वुत्तं पावमिणं जिणवरेहिं पन्नत्तं ।
रागाईण नियाणं भवपायवबीयभूयाणं ॥ २७१ ॥

[ वर्जनमिह पूर्वोक्तं पापमिदं जिनवरैः प्रज्ञप्तम् ।
रागादीनां निदानं भवपादपबीजभूतानाम् ॥२७१॥ ]

वर्जनमिह पूर्वोक्तं उपयुक्तं इत्यादिना ग्रन्थेन ( १०८ गाथा ) किमेतद्वर्ज्यते इत्याशङ्क्याह पापमिदं परदारासेवनं जिनवरैः प्रज्ञप्तं तीर्थकरगणधरैः प्ररूपितमिति किंविशिष्टं रागादीनां निदानं कारणं किंविशिष्टानां भवपादपबीजभूतानां रागादीनामिति ॥

पडिवज्जिऊण य वयं तस्सइयारे जहाविहिं नाउं ।
संपुन्नपालणट्ठा परिहरियव्वा पयत्तेणं ॥ २७२ ॥

पूर्ववत् (२५७), अतीचारानाह ।

इत्तरियपरिग्गहियापरिग्गहियागमणणंगकीडं च ।
परविवाहकरणं कामे तिव्वाभिलासं च ॥ २७३ ॥

[ इत्वरपरिगृहीतापरिगृहीतागमनानंगक्रीडाः च ।
परविवाहकरणं कामे तीव्राभिलाषः च ॥ २७३ ॥

इत्वरपरिगृहीतागमनं स्तोककालपरिगृहीतागमनं भाटीप्रदानेन कियन्तमपि कालं स्ववशीकृतवेश्यामैथुनासेवनमित्यर्थः ।१। अपरिगृहीतागमनं अपरिगृहीता नाम वेश्या अन्यसत्कागृहीतभाटी कुलाङ्गना वा अनाथेति तद्गमनं यथाक्रमं स्वदारसंतोषवत्परदारवर्जिनोरतीचारः ।२। अनङ्गक्रीडा नाम कुचकक्षोरुवदनांतरक्रीडा तीव्रकामाभिलाषेण वा परिसमाप्तसुरतस्याप्याहार्यैः स्थूलकादिभिर्योषिदवाच्यप्रदेशासेवनमिति । ३। परविवाहकरणमन्यापत्यस्य कन्याफललिप्सया स्नेहसंबन्धेन वा विवाहकरणं स्वापत्येष्वपि सङ्ख्याभिग्रहो न्याय्य इति ।४। कामे तीव्राभिलापश्चेति सूचनात्कामभोगतीव्राभिलाषः कामा शब्दादयः भोगा रसादयः एतेषु तीव्राभिलाषः अत्यन्ततदध्यवसायित्वम्।५।एतानि समाचरन्नतिचरति चतुर्थमणुव्रतमिति ॥

वज्जिज्जा मोहकरं परजुवइदंसणाइ सवियारं
एए खु मयणवाणा चरित्तपाणे विणासंति ॥ २७४ ॥

[ वर्जयेत् मोहकरं परयुवतिदर्शनादि सविकारम् ।
एते खलु मदनबाणाः चारित्रप्राणान् विनाशयन्ति २७४]

वर्जयेन्मोहकरं परयुवतिदर्शनं आदिशब्दात्संभापणादिपरिग्रहः किंभूतं सविकारं सविभ्रमं । एते दर्शनादयो यस्मान्मदनबाणाश्चारित्रप्राणान् विनाशयन्तीति ॥ उक्तं च ।

अनिशमशुभसंज्ञाभावनासन्निहत्या
कुरुत कुशलपक्षप्राणरक्षां नयज्ञाः ।

हृदयमितरथा हि स्त्रीविलासाभिधाना
मदनशबरबाणश्रेणयः काणयन्ति ॥ इति

उक्तं चतुर्थमणुव्रतमधुना पञ्चममाह।

सचित्ताचित्तेसुं इच्छापरिणाममो य पचमयं।
भणियं अणुव्वयं खलु समासओ णंतनाणिहिं २७५

[ सचित्ताचित्तेषु इच्छापरिमाणं च पञ्चमकम्।
भणितमणुव्रतं खलु समासतः अनन्तज्ञानिभिः २७५ ]

सचित्ताचित्तेषु द्विपदादिहिरण्यादिषु इच्छायाः परिमाणमिच्छापरिमाणं एतावतामूर्ध्वमग्रहणमित्यर्थः। एतत्पञ्चममुपन्यासक्रमप्रामाण्याद्भणितमणुव्रतं खलु समासतः सामान्येनानन्तज्ञानिभिस्तीर्थकरैरिति ॥

भेएण खित्तवत्थूहिरण्णमाईसु होइ नायव्वं।
दुपयाईसु य सम्मं वज्जणमेयस्स पुव्वुत्तं ॥ २७६ ॥

[ भेदेन क्षेत्रवास्तुहिरण्यादिषु भवति ज्ञातव्यम्।
द्विपदादिषु च सम्यक् वर्जनमेतस्य पूर्वोक्तम् ॥ २७६ ॥

भेदेन विशेषेण क्षेत्रवास्तुहिरण्यादिषु भवति ज्ञातव्यं, किं इच्छापरिमाणमिति वर्तते, तत्र क्षेत्रं सेतु केतु च उभयं च, वास्तवगारं खातमुच्छ्रितं खातोच्छ्रितं च, हिरण्यं रजतमघटितमादिशब्दाद्धनधान्यादिपरिग्रहः एतदचित्तविषयं द्विपदादिषु चेत्येतत्सचित्तविषयं द्विपदचतुःपदापदादिषु दासीहस्तिवृक्षादिषु सम्यक् प्रवच-

नोक्तेन विधिना यर्जनमेतस्य पञ्चमाणुव्रतविषयस्य पूर्वोक्तं उपयुक्तो गुरुमूले इत्यादिना ग्रन्थेनेति ।

पडिवज्जिऊण य वयं तस्सइयारे जहाविहिं नाउं ।
संपुन्नपालणट्ठा परिहरियव्वा पयत्तेणं ॥ २७७ ॥
पूर्ववत् (२५७)

खित्ताइहिरन्नाईधणाइदुपयाइकुवियगस्स तहा ।
सम्मं विसुद्धचित्तो न पमाणाइक्कमं कुज्जा ॥ २७८ ॥

[क्षेत्रादेः हिरण्यादेः धनादेः द्विपदादेः कुप्यकस्य तथा।
सम्यग्विशुद्धचित्तो न प्रमाणातिक्रमं कुर्यात् ॥२७८॥]

क्षेत्रादेरनन्तरोदितस्य तथा हिरण्यादेर्धनादेर्द्विपदादेः कुप्यस्य तथा आसनशयनादेरुपस्करस्य सम्यक् विशुद्धचित्तो ऽनिर्मायो ऽप्रमत्तः सन् न प्रमाणातिक्रमं कुर्यादिति ॥

भाविज्ज य संतोसं गहियमियाणिं अजाणमाणेणं ।
थोवं पुणो न एवं गिण्हिस्सामोत्ति चिंतिज्जा २७९

[भावयेच्च संतोषं गृहीतमिदानीमजानानेन ।
स्तोकं पुनः न एवं ग्रहीष्यामीति चिन्तयेत् ॥ २७९ ॥]

भावयेच्च संतोषं किमनेन यस्तुना परिगृहीतेन तथा गृहीतमिदानीमजानानेन स्तोकमिच्छापरिमाणमिति पुनर्नैवमन्यस्मिंश्चतुर्मासके गृहीष्यामीति न चिन्तयेदतिचार एष इति गाथार्थः ॥

उक्तान्यणुव्रतानि सांप्रतमेषामेवाणुव्रतानां परिपालनाय भाव-

नाभूतानि गुणव्रतान्यभिधीयन्ते। तानि पुनस्त्रीणि भवन्ति। तद्यथा। दिग्व्रतमुपभोगपरिभोगपरिमाणं अनर्थदण्डपरिवर्जनमिति तत्राद्यगुणव्रतस्वरूपाभिधित्सयाह।

उड्ढमहे तिरियं पि य दिसासु परिमाणकरणमिह पढमं।
भणियं गुणव्वयं खलु सावगधम्मम्मि वीरेण ॥२८०॥

[ऊर्ध्वमधस्तिर्यगपि च दिक्षु परिमाणकरणमिह प्रथमम्।
भणितं गुणव्रतं खलु श्रावकधर्मे वीरेण ॥ २८० ॥]

ऊर्ध्वमधस्तिर्यक् किं दिक्षु परिमाणमिति। दिशो ह्यनेकप्रकारा वर्णिताः शास्त्रे तत्र सूर्योपलक्षिता पूर्वा शेषाश्च दक्षिणादिकास्तदनुक्रमेण द्रष्टव्याः। तत्रोर्ध्वदिक्परिमाणमूर्ध्वदिग्व्रतमेतावती दिगूर्ध्वं पर्वताद्यारोहणादवगाहनीया न परत इति। एवंभूतमधोदिक्परिमाणं अधोदिग्व्रतं एतावत्यधोदिक् इन्द्रकूपाद्यवतरणादवगाहनीया न परत इति। एवंभूतं तिर्यग्दिक्परिमाणकरणं तिर्यग्दिग्व्रतं एतावती दिक्पूर्वेणावगाहनीया एतावती दक्षिणेनेत्यादि न परत इत्येवमात्मकं एतदित्थं त्रिधा दिक्षु परिमाणकरणं इह प्रवचने प्रथममाद्यं सूत्रक्रमप्रामाण्यात् गुणाय व्रतं गुणव्रतं इत्यस्मिन् हि सत्यवगृहीतक्षेत्राद्बहिः स्थावरजंगमप्राणिगोचरो दण्डः परित्यक्तो भवतीति गुणः श्रावकधर्मे इति श्रावकधर्मविषयमेव केन भणितमिति आह वीरेण

विदारयति यत्कर्म तपसा च विराजते।
तपोवीर्येण युक्तश्च तस्माद्वीर इति स्मृतः॥

तेन इति चरमतीर्थकृता गुणव्रतमित्युक्तमतो गुणदर्शनायाह, अथवा गुणव्रताकरणे दोषमाह ॥

तत्तायगोलकप्पो पमत्तजीवोऽनिवारियप्पसरो ।
सव्वत्थ किं न कुज्जा पावं तक्कारणाणुगओ ॥ २८१ ॥

[ तप्तायोगोलकल्पः प्रमत्तजीवोऽनिवारितप्रसरः ।
सर्वत्र किं न कुर्यात् पापं तत्कारणानुगतः ॥ २८१ ॥ ]

तप्तायोगोलकल्पस्तप्तलोहपिण्डसदृशः कोऽसौ प्रमत्तजीवः प्रमादयुक्त आत्मासावनिवारितप्रसरोऽनिवृत्त्या अप्रतिहतप्रमादसामर्थ्यः सन् तथागतेः सर्वत्र क्षेत्रे किं न कुर्यात्कुर्यादेव पापं अपुण्यं तत्कारणानुगतः प्रमादपापकारणानुगत इति ॥

पडिवन्नम्मि य विहिणा इमम्मि तव्वज्जणं गुणो नियमा ।
अइयाररहियपालणभावस्स वि तप्पसूईओ ॥ २८२ ॥

[ प्रतिपन्ने च विधिना अस्मिन् तद्वर्जनं गुणो नियमात् ।
अतिचाररहितपालनभावस्यापि तत्प्रसूतेः ॥ २८२ ॥ ]

प्रतिपन्ने चाङ्गीकृते च विधिना सूत्रोक्तेन अस्मिन् गुणव्रते तद्वर्जनं प्रमादपापवर्जनं गुणो नियमादात्मोपकारोऽवश्यंभावी न चैवं मंतव्यं एतदर्थपरिपालनभाव एव ज्यायान् नत्वेतत्प्रतिपत्तिः कथमतिचाररहितपालनभावस्यापि निरतिचारपालनभावस्यापि तत्प्रसूतेर्गुणव्रतादेवोत्पादात्तथाप्रतिपत्तौ हि तथाप्रतिपन्न इति इदमतिचाररहितमनुपालनीयमतोऽस्यैवातिचारानभिधित्सुराह ॥

अवरेण जाणि जोयणाणि ताणि पुव्वदिसाए ण छुभेज्जा सिय
घोलीणो होज्जा णियत्तियव्वं विस्सरीए वा ण गंतव्वं अण्णो वि न
विसज्जियव्वो अणाणाए कोइ गओ होज्जा जं विसुमरियखे-
त्तगएण लद्धं अणाणाहिगएण वा तं ण गिह्णिज्जइ ।

उक्तं सातिचारं प्रथमं गुणव्रतं अधुना द्वितीयमुच्यते।

उवभोगपरीभोगे बीयं परिमाणकरणमो नेयं ।
अणियमियवाविदोसा न भवंति कयम्मि गुणभावो२८४

[ उपभोगपरिभोगयोः द्वितीयं परिमाणकरणं विज्ञेयम् ।
अनियमितव्यापिदोषाः न भवन्ति कृते गुणभावः॥२८४॥]

उपभोगपरिभोगयोरिति उपभोगपरिभोगविषये यत्परिमाणकरणं तदेव द्वितीयं गुणव्रतं विज्ञेयमिति पदघटना पदार्थस्तु उपभुज्यत इत्युपभोगः अशनादिरुपशब्दस्य सकृदर्थत्वात्सकृद्भुज्यत इत्यर्थः परिभुज्यत इति परिभोगो वस्त्रादिः पुनः पुनः भुज्यत इति भावः परिशब्दस्याभ्यावृत्त्यर्थत्वादयं चात्मक्रियारूपो पि भावतो विषये उपचरितो विषयविषयिणोरभेदोपचारादन्तर्भोगो वा उपभोगः उपशब्दस्यान्तर्वचनत्वात् बहिर्भोगो वा परिभोगः परिशब्दस्य बहिर्वाचकत्वादेतत्परिमाणकरणं एतावदिदं भोक्तव्यमुपभोक्तव्यं वा अतोऽन्यन्नेत्येवंरूपं अस्मिन् कृते गुणमाह अनियमिते असंकल्पिते ये व्यापिनस्तद्विषयं व्याप्तुं शीला दोषास्ते न भवन्ति कृते-ऽस्मिंस्तद्विरतेरिति गुणभावोऽयमत्र गुण इति सांप्रतमुपभोगादिभेदमाह ॥

एवं खु जंतपीलणकम्मं निल्लंछणं च दवदाणं ।
सरदहतलायसोसं असईपोसं च वज्जिज्जा ॥ २८८ ॥

[ एवं खलु यन्त्रपीडनकर्मनिर्लाञ्छनं च दवदानम् ।
सरोहदतडागशोषं असतीपोषं च वर्जयेत् ॥ २८८ ॥]

एवमेव शास्त्रोक्तेन विधिना यन्त्रपीडनकर्म निर्लछनं च कर्म दवदानं सरोहृदतडागशोषं असतीपोषं च वर्जयेदिति गाथाद्वयाक्षरार्थः । भावार्थस्तु वृद्धसंप्रदायादेव अवसेयः स चायम् ।

इंगालकम्मंति इंगाले दहिउं विकिणइ तत्थ छण्हं कायाणं वहो तंन कप्पइ । वणकम्मं जो वणं किणइ पच्छा रुक्खे छिंदिउं मुल्लेण जीवइ एवं पत्तिगाइवि पडिसिद्धा भवंति । साडीकम्मं सागडियत्तणेण जीवइ तत्थ बंधवहाई बहुदोसा । भाडीकम्मं सएण भंडोवक्खरेण भाडएण वहइ परायगं ण कप्पइ अन्नेसिं वा सगडे बइल्लयवेइ एवमाइ ण कप्पइ । फोडीकम्मं उडत्तणं हलेण वा भूमिं फाडेउं जीवइ । दंतवाणिज्जं पुव्वं चेव पुलिंदाणं मुल्लं देइ दंते देज्जाहित्ति पच्छा पुलिंदा हत्थिं घायंति अचिरा सो वाणियओ एतित्ति काउं एवं धीवराणं संखमुल्लं देइ एवमाइ न कप्पइ पुव्वाणीयं किणइ । लक्खवाणिज्जे वि एए चेव दोसा तत्थ किमिया होंति । रसवाणिज्जं कल्लायालगत्तणं तत्थ सुरादिपाणे बहुदोसा मारण अक्कोस वहाई तम्हा न कप्पइ । केसवाणिज्जं दासीओ गहाय अन्नत्थ विक्किणइ जत्थ अग्घेति एत्थ वि अणेगे दोसा परवसत्तादयो । विसवाणिज्जं विसविक्कओ सो ण कप्पइ

तेण चहूण जीवाण विराहणा। जंतपीलणकम्मं तेलियजंतं उच्छुजंतं चक्कमादी तं न कप्पइ। निल्लंछणकम्मं वद्धेउं चल्लदाइ न कप्पइ। दवग्गिदावणयाकम्मं वणदवं देइ छेत्तरक्खणनिमित्तं जहा उत्तरावहे पच्छा दड्ढे तरुणगतणं उट्ठेइ तत्थ सत्ताणं सयसहस्साण वहो। सरदहतलायसोसणयाकम्मं सरदहतलागाईणि सोसेइ पच्छा वाविज्जइ एयं ण कप्पइ। असईपोसणयाकम्मं असईओ पोसेइ जहा गोल्लविसए जोणिपोसगा दासीण भणियं भाडिं गेह्णंति।"

प्रदर्शनं चैतद्बहुसावद्यानां कर्मणामेवंजातीयानां न पुनः परिगणनमिति।

उक्तं सातिचारं द्वितीयं गुणव्रतं सांप्रतं तृतीयमाह।

विरई अणत्थदंडे तच्चं स चउव्विहो अवज्झाणो।
पमायायरियहिंसप्पयाणपावोवएसे य ॥ २८९ ॥

[ विरतिरनर्थदण्डे तृतीयं स चतुर्विधः अपध्यानः।
प्रमादाचरितः हिंसाप्रदानः पापोपदेशश्च ॥ २८९ ॥ ]

विरतिर्निवृत्तिरनर्थदण्डे अनर्थदण्डविषया इह लोकमप्यङ्गीकृत्य निःप्रयोजनभूतोपमर्दनिग्रहविषया तृतीयं गुणव्रतमिति गम्यते स चतुर्विधः सोऽनर्थदण्डः चतुःप्रकारः। अपध्यान इति अपध्यानाचरितोऽप्रशस्तध्यानेनासेवितः अत्र देवदत्तश्रावककोङ्कणार्यकसाधुप्रभृतयो ज्ञापकं। प्रमादाचरितो मद्यादिप्रमादेनासेवितः अनर्थदण्डत्वं चास्योक्तशब्दार्थद्वारेण स्वबुद्ध्या भाव-

समिहे पोसहसालाए वा तत्थ नवरि गमणं णत्थि । जो इड्ढि-पत्तो सो सव्विड्ढीए एइ तेण जणस्स आढा होइ आढियार्य साहु-णो सुपुरिसपरिग्गहेणं जइ सो कयसामाइओ एइ ताहे आसहत्थिमाइजणेणय अधिगरणं वड्ढइ ताहे ण करेइ कयसामा-इएण य पाएहिं आगंतयं तेण ण करेइ आगओ साहुम मीवे करेइ जइ सो सावगो तो ण कोइ उट्ठेइ अह अहाभद्दओ जइपूया कया होउत्ति भणंति ताहे पुव्वरइयं आसणं कीरइ आयरिया उट्ठिया य अच्छंति तत्थ उट्ठिंतमणुट्ठिंते दोसा विभासियव्वा पच्छा सो इ-ड्ढिपत्तो सामाइयं करेइ अणेण विहिणा करेमि भंते सामाइयं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेणं जाव णियमं पज्जुवा-सामित्ति एवं सामाइयं काउं पडिक्कंतो वंदित्ता पुच्छइ सो य किर सामाइयं करेंतो मउडं अवणेइ कुंडलाणि णाममुद्दं पुप्फतंबोलं पावारगमाइ वा वोसिरइ एसो विही सामाइयस्स "

अत्राह

**कयसामइओ सो साहुरेव ता इत्तरं न किं सव्वं ।**
**वज्जेइ य सावज्जं तिविहेण वि संभवाभावा ॥२९३॥**

[कृतसामायिकः असौ साधुरेव तस्मादित्वरं न किं सर्वम्
वर्जयति च सावद्यं त्रिविधेनापि संभवाभावात्॥२९३॥]

कृतसामायिकः प्रतिपन्नसामायिकः सन्नसौ श्रावको वस्तुतः धुरेव सावद्ययोगनिवृत्तेर्यस्मादेवं तस्मात्साधुवदेवेत्वरमल्पकालं . . किं न सर्वं निरवशेषं वर्जयति परिहरत्येव सावद्यं सपापं

योगमिति गम्यते त्रिविधेनापि मनसा वाचा कायेन चेति। अत्रोच्यते संभवाभावात् श्रावकमधिकृत्य त्रिविधेनापि सर्वसावद्ययोगवर्जनासंभवादिति । असंभवमेवाह ।

आरंभाणुमईओ कणगाइसु अग्गहाणिवित्तीओ ।
भुज्जो परिभोगाओ भेओ एसिं जओ भणिओ॥२९४॥

[आरंभानुमतेः कनकादिषु आग्रहानिवृत्तेः ।
भूयः परिभोगात् भेदः एतयोः यतः भणितः ॥ २९४ ॥ ]

आरंभानुमतेः श्रावकस्यारंभेष्वनुमतिरव्यवच्छिन्नैव तथा तेषां प्रवर्तितत्वात् कनकादिषु द्रव्यजातेषु आग्रहानिवृत्तेरात्मीयाभिमानानिवृत्तेरनिवृत्तिश्च भूयः परिभोगादन्यथा सामायिकोत्तरकालमपि तदपरिभोगप्रसङ्गः सर्वथा त्यक्तत्वात् भेदश्चैतयोः साधुश्रावकयोः यतो भणित उक्तः परममुनिभिरिति। भेदानभिधित्सयाह।

सिक्खा दुविहा गाहा उववायठिइगईकसाया य ।
बंधंता वेयंता पडिवज्जाइक्कमे पंच ॥ २९५ ॥

[शिक्षा द्विविधा गाथा उपपातस्थितिगतिकषायाश्च।
बन्धः वेदना प्रतिपत्तिरतिक्रमाः पञ्च ॥ २९५ ॥ ]

शिक्षाकृतः साधुश्रावकयोर्भेदः सा च द्विविधा ग्रहणासेवनारूपेति वक्ष्यति तथा गाथा भेदिका, सामाइयंमि उ कए इत्यादिरूपेति वक्ष्यत्येव तथोपपातो भेदकः स्थितिर्भेदिका गतिर्भेदिका कषायाश्च भेदका बन्धश्च भेदकः वेदना भेदिका प्रतिपत्ति-

भेदिका अतिक्रमो भेदक इत्येतत् सर्वमेव प्रतिद्वारं स्वयमेव वक्ष्यति ग्रन्थकारः पच्चाथवा किं चेति पाठान्तरार्थसहितमपि इति द्वारगाथासमुदायार्थः ।

अधुनाद्यद्वारावयवार्थप्रतिपादनायाह ॥

गहणासेवणरूवा सिक्खा भिन्ना य साहुसड्ढाणं ।
पवयणमाईचउदसपुव्वंता पढमिया जइणो ॥२९६॥

[ ग्रहणासेवनरूपा शिक्षा भिन्ना च साधुश्राद्धयोः ।
प्रवचनमात्रादिचतुर्दशपूर्वान्ता प्रथमा यतेः ॥ २९६ ॥]

ग्रहणासेवनरूपा शिक्षेति शिक्षाभ्यासः सा द्विप्रकारा ग्रहणरूपासेवनरूपा च भिन्ना चेयं साधुश्रावकयोः अन्यथारूपा साधोरन्यथारूपा श्रावकस्येति । तथा चाष्टप्रवचनमात्रादिचतुर्दशपूर्वान्ता प्रथमा यतेरिति ग्रहणशिक्षामधिकृत्य साधुः सूत्रतोऽर्थतश्च जघन्येनाष्टौ प्रवचनमातरस्त्रिगुप्तिपञ्चसमितिरूपा उत्कृष्टतस्तु बिंदुसारपर्यन्तानि चतुर्दशपूर्वाणि गृह्णातीति ॥

पवयणमाईछज्जीवणियंता उभयओ वि इयरस्स ।
पिंडेसणा उ अत्थे इत्तो इयरं पवक्खामि ॥ २९७ ॥

[ प्रवचनमातृषड्जीवनिकायान्ता उभयतोऽपि इतरस्य ।
पिण्डैषणा त्वर्थतः अतः इतरां प्रवक्ष्यामि ॥ २९७ ॥ ]

प्रवचनमातृषड्जीवनिकायान्ता उभयतोऽपि सूत्रतोऽर्थतश्चेतरस्य श्रावकस्य पिण्डैषणार्थतः न सूत्रत इति एतदुक्तं भवति श्रावकः सूत्रतोऽर्थतश्च जघन्येन ता एव प्रवचनमातर उत्कृष्-

तत्तु षड्जीवनिकायं यावदुभयतोऽर्थतस्तु पिण्डैषणां न तु तामपि सूत्रत इत्येतायद्गृह्णाति । उक्ता ग्रहणशिक्षा, अत ऊर्ध्वमिलरामासेवनशिक्षां प्रवक्ष्यामि यथासां भेदिका एतयोरिति ।

संपुन्नं परिपालइ सामायारिं सदेव साहु त्ति ।
इयरो तक्कालम्मि वि अपरिन्नाणाइओ न तहा२९८

[ संपूर्णां परिपालयति सामाचारीं सदैव साधुरिति ।
इतरः तत्कालेऽपि अपरिज्ञानादेः न तथा ॥ २९८ ॥ ]

संपूर्णां निरवशेषां परिपालयत्यासेवते सामाचारीं मुखवस्त्रिकाप्रत्युपेक्षणादिकां क्रियां सदैव सर्वकालमेव साधुरित्या जन्म तथाप्रवृत्तेः इतरः श्रावकस्तत्कालेऽपि सामायिकसमयेऽपि अपरिज्ञानादेरपरिज्ञानादभिव्यक्ताभिवृत्त्या असंभवादनभ्यासाच्च न तथा पालयत्येवमासेवनाशिक्षापि भिन्नैव तयोरिति द्वारं सूत्रप्रामाण्याच्च विशेष इति गाथेयुपलक्षिता तामाह ॥

सामाइयम्मि उ कए समणो इव सावओ हवइ जम्हा ।
एएण कारणेणं बहुसो सामाइयं कुज्जा ॥ २९९ ॥

[ सामायिके तु कृते श्रमण इव श्रावको भवति यस्मात् ।
एतेन कारणेन बहुशः सामायिकं कुर्यात् ॥ २९९ ॥ ]

सामायिके प्राङ्निरूपितशब्दार्थे तुशब्दो ऽवधारणार्थः सामायिक एव कृते न शेषकालं श्रमण इव साधुरिव श्रावको भवति यस्मादेतेन कारणेन बहुशोऽनेकशः सामायिकं कुर्यादिति अत्र

भेदिका अतिक्रमो भेदक इत्येतत् सर्वमेव प्रतिद्वारं स्वयमेव वक्ष्यति ग्रन्थकारः पश्चाथवा किं चेति पाठान्तरार्थसहितमपि इति द्वारगाथासमुदायार्थः ।

अधुनाद्यद्वारावयवार्थप्रतिपादनायाह ॥

गहणासेवणरूवा सिक्खा भिन्ना य साहुसड्ढाणं ।
पवयणमाईचउदसपुव्वंता पढमिया जइणो ॥२९६॥

[ ग्रहणासेवनरूपा शिक्षा भिन्ना च साधुश्राद्धयोः ।
प्रवचनमात्रादिचतुर्दशपूर्वान्ता प्रथमा यतेः ॥ २९६ ॥]

ग्रहणासेवनरूपा शिक्षेति शिक्षाभ्यासः सा द्विप्रकारा ग्रहणरूपासेवनरूपा च भिन्ना चेयं साधुश्रावकयोः अन्यथारूपा साधो रन्यथारूपा श्रावकस्येति । तथा चाष्टप्रवचनमात्रादिचतुर्दशपूर्वान्ता प्रथमा यतेरिति ग्रहणशिक्षामधिकृत्य साधुः सूत्रतोऽर्थतश्च जघन्येनाष्टौ प्रवचनमातरस्त्रिगुप्तिपञ्चसमितिरूपा उत्कृष्टतस्तु बिन्दुसारपर्यन्तानि चतुर्दशपूर्वाणि गृह्णातीति ॥

पवयणमाईछज्जीवणिपंता उभयओ वि इयरस्स ।
पिंडेसणा उ अत्थे इत्तो इयरं पयक्कमाणि ॥ २९७ ॥

[ प्रवचनमातृषड्जीवनिकायान्ता उभयतोऽपि इतरस्य ।
पिण्डैषणा त्वर्थतः अतः इतरां प्रयत्नमाणि ॥ २९७ ॥ ]

प्रवचनमातृषड्जीवनिकायान्ता उभयतोऽपि सूत्रतोऽर्थतश्चेतरस्य श्रावकस्य पिण्डैषणार्थतः स सूत्र इति एतदुक्तं भवति श्रावकः सूत्रतोऽर्थतश्च जघन्येन ता एव प्रवचनमातर उत्कृष्ट

[ पल्योपमपृथक्त्वं तथैव पल्योपमं चेतरा ।
द्वयोरपि यथासंख्यं भणिता त्रैलोक्यदर्शिभिः॥ ३०२॥]

पल्योपमपृथक्त्वं तथैव पल्योपमं चेतरा जघन्या सौधर्मे एव साधोः पल्योपमपृथक्त्वं स्थितिः द्विप्रभृतिरा नवभ्यः पृथक्त्वं श्रावकस्य तु पल्योपममिति अत एवाह द्वयोरपि साधुश्रावकयो-र्भणिता त्रैलोक्यदर्शिभिः स्थितिर्गम्यते इति द्वारं। तथा गतिभे-दिकेत्याह ।

पंचसु ववहारेणं जइणो सड्ढस्स चउसु गमणं तु ।
गइसु चउपंचमासु चउसु य अन्ने जहाकमसो ३०३

[ व्यवहारेण पञ्चसु यतेः श्राद्धस्य चतसृषु गमनमिति ।
गतिषु चतुःपंचमासु चतसृषु चान्ये यथाक्रमशः ॥३०३॥]

व्यवहारेण सामान्यतो लोकस्थितिमङ्गीकृत्य पञ्चसु यतेः साधोः श्रावकस्य चतसृषु गमनमिति। कासु गतिषु नारकतिर्यङ्नरामरसि-द्धिरूपासु चउपंचमासु चउसु य अन्ने जहाकमसो अन्ये त्वभि-दधति साधोः सुरगतौ मोक्षगतौ च श्रावकस्य चतसृष्वपि भवां-तर्गतिष्विति द्वारं। कषायाश्च भेदका इत्याह ॥

चरमाण चउन्हं पि हु उदओऽणुदओ व हुज्ज साहुस्स।
इयरस्स कसायाणं दुवालसट्ठाणमुदओ उ ॥ ३०४ ॥

[ चरमाणां चतुर्णामपि उदयोऽनुदयो वा भवेत् साधोः ।
इतरस्य कषायाणां द्वादशानामष्टानामुदयः तु ॥३०४॥]

श्रमण इवोक्तं न तु श्रमण एवेति यथा समुद्र इव तडागं न तु समुद्र एवेत्यभिप्राय इति। द्वारं उपपातो विशेषक इत्येतदाह॥

अविराहियसामन्नस्स साहुणो सावगस्स य जहन्नो।
सोहंमे उववाओ भणिओ तेलुक्कदंसीहिं ॥ ३०० ॥

[अविराधितश्रामण्यस्य साधोः श्रावकस्य च जघन्यः।
सौधर्मे उपपातो भणितः त्रैलोक्यदर्शिभिः ॥ ३०० ॥

अविराधितश्रामण्यस्य प्रव्रज्यादिवसादारभ्याखण्डितश्रमणभावस्य साधोः श्रावकस्य च अविराधितश्रावकभावस्येति गम्यते जघन्यः सर्वस्तोकः सौधर्मे प्रथमदेवलोके उपपातो भवति जन्म भणित उक्तः त्रैलोक्यदर्शिभिः सर्वज्ञैरिति ॥

उक्कोसेण अणुत्तरअच्चुयकप्पेसु तत्थ तेसि ठिई।
तित्तीससागराइं बावीसं चेव उक्कोसा ॥ ३०१ ॥

[उत्कृष्टतोऽनुत्तराच्युतकल्पयोः तत्र तयोः स्थितिः।
त्रयस्त्रिंशत्सागराणि द्वाविंशतिश्चोत्कृष्टा ॥ ३०१ ॥]

उत्कृष्टतोऽनुत्तराच्युतकल्पयो[ग]ने साधोरनुत्तरविमानेषु श्रावकस्याच्युतकल्प उपपात इति द्वारं। तत्र तयोरिति तत्रानुत्तरविमानाच्यु[त]योस्तयोःसाधुश्रावकयोः स्थितिर्विशिष्टप्राणसंधारणात्मिका यथासङ्ख्यं त्रयस्त्रिंशत्सागरोपमाणि द्वाविंशतिरित्युत्कृष्टा साधोस्त्रयस्त्रिंशदनुत्तरेषु श्रावकस्य तु द्वाविंशतिरच्युत इति गाथार्थः।

पलिओवमप्पुहुत्तं तहेव पलिओवमं च इयरा उ।
दुह्नं पि जहासंखं भणियं तेलुक्कदंसीहिं ॥ ३०२ ॥

[ पल्योपमपृथक्त्वं तथैव प॒ल्योपमं चेतरा ।
द्वयोरपि यथासंख्यं भणिता त्रैलोक्यदर्शिभिः॥ ३०२॥]

पल्योपमपृथक्त्वं तथैव पल्योपमं चेतरा जघन्या सौधर्मे एव साधोः पल्योपमपृथक्त्वं स्थितिः द्विप्रभृतिरा नवभ्यः पृथक्त्वं श्रावकस्य तु पल्योपममिति अत एवाह द्वयोरपि साधुश्रावकयो-र्भणिता त्रैलोक्यदर्शिभिः स्थितिर्गम्यते इति द्वारं। तथा गतिर्भे-दिकेत्याह ।

पंचसु ववहारेणं जइणो सड्ढस्स चउसु गमणं तु ।
गइसु चउपंचमासु चउसु य अन्ने जहाकमसो ३०३

[ व्यवहारेण पञ्चसु यतेः श्राद्धस्य चतसृषु गमनमिति ।
गतिषु चतुःपंचमासु चतसृषु चान्ये यथाक्रमशः ॥३०३॥]

व्यवहारेण सामान्यतो लोकस्थितिमङ्गीकृत्य पञ्चसु यतेः साधोः श्रावकस्य चतसृषु गमनमिति। कासु गतिषु नारकतिर्यङ्नरामरसि-द्धिरूपासु चउपंचमासु चउसु य अन्ने जहाकमसो अन्ये त्वभि-दधति साधोः सुरगतौ मोक्षगतौ च श्रावकस्य चतसृष्वपि भवां-तर्गतिष्विति द्वारं। कषायाश्च भेदका इत्याह ॥

चरमाण चउन्हं पि हु उदओऽणुदओ व हुज्ज साहुस्स।
इयरस्स कसायाणं दुवालसण्हाणमुदओ उ ॥ ३०४ ॥

[ चरमाणां चतुर्णामपि उदयोऽनुदयो वा भवेत् साधोः ।
इतरस्य कषायाणां द्वादशानामष्टानामुदयः तु ॥३०४॥]

[ पल्योपमपृथक्त्वं तथैव पल्योपमं चेतरा ।
द्वयोरपि यथासंख्यं भणिता त्रैलोक्यदर्शिभिः॥ ३०२॥]

पल्योपमपृथक्त्वं तथैव पल्योपमं चेतरा जघन्या सौधर्मे एव साधोः पल्योपमपृथक्त्वं स्थितिः द्विप्रभृतिरा नवभ्यः पृथक्त्वं श्रावकस्य तु पल्योपममिति अत एवाह द्वयोरपि साधुश्रावकयोर्भणिता त्रैलोक्यदर्शिभिः स्थितिर्गम्यते इति द्वारं। तथा गतिर्भेदिकेत्याह ।

पंचसु ववहारेणं जइणो सड्ढस्स चउसु गमणं तु ।
गइसु चउपंचमासु चउसु य अन्ने जहाकमसो ३०३

[ व्यवहारेण पञ्चसु यतेः श्राद्धस्य चतसृषु गमनमिति ।
गतिषु चतुःपंचमासु चतसृषु चान्ये यथाक्रमशः ॥३०३॥]

व्यवहारेण सामान्यतो लोकस्थितिमङ्गीकृत्य पञ्चसु यतेः साधोः श्रावकस्य चतसृषु गमनमिति। कासु गतिषु नारकतिर्यङ्नरामरसिद्धिरूपासु चउपंचमासु चउसु य अन्ने जहाकमसो अन्ये त्वभिदधति साधोः सुरगतौ मोक्षगतौ च श्रावकस्य चतसृष्वपि भवांतर्गतिष्विति द्वारं। कषायाश्च भेदका इत्याह ॥

चरमाण चउन्हं पि हु उदओऽणुदओ य हुज्ज साहुस्स।
इयरस्स कसायाणं दुवालसण्हाणमुदओ उ ॥ ३०४ ॥

[ चरमाणां चतुर्णामपि उदयोऽनुदयो वा भवेत् साधोः ।
इतरस्य कषायाणां द्वादशानामष्टानामुदयः तु ॥३०४॥]

श्रमण इवोक्तं न तु श्रमण एवेति यथा समुद्र इव तडागं न तु समुद्र एवेत्यभिप्राय इति । द्वारं उपपातो विशेषक इत्येतदाह ॥

अविराहियसामन्नस्स साहुणो सावगस्स य जहन्नो ।
सोहंमे उववाओ भणिओ तेलुक्कदंसीहिं ॥ ३०० ॥
[ अविराधितश्रामण्यस्य साधोः श्रावकस्य च जघन्यः ।
सौधर्मे उपपातो भणितः त्रैलोक्यदर्शिभिः ॥ ३०० ॥

अविराधितश्रामण्यस्य प्रव्रज्यादिवसादारभ्याखण्डितश्रमणभावस्य साधोः श्रावकस्य च अविराधितश्रावकभावस्येति गम्यते जघन्यः सर्वस्तोकः सौधर्मे प्रथमदेवलोके उपपातो भवति जन्म भणित उक्तः त्रैलोक्यदर्शिभिः सर्वज्ञैरिति ॥

उक्कोसेण अणुत्तरअच्चुयकप्पेसु तत्थ तेसि ठिई ।
तित्तीससागराइं बावीसं चेव उक्कोसा ॥ ३०१ ॥
[ उत्कृष्टतोऽनुत्तराच्युतकल्पयोः तत्र तयोः स्थितिः ।
त्रयस्त्रिंशत्सागराणि द्वाविंशतिश्चोत्कृष्टा ॥ ३०१ ॥ ]

उत्कृष्टतोऽनुत्तराच्युतकल्पयोः ने साधोरनुत्तरविमानेषु श्रावकस्याच्युतकल्प उपपात इति द्वारं । तत्र तयोरिति तत्रानुत्तरविमानाच्यु योस्तयोःसाधुश्रावकयोः स्थितिर्विशिष्टप्राणसंधारणात्मिका यथासङ्ख्यं त्रयस्त्रिंशत्सागरोपमाणि द्वाविंशतिरित्युत्कृष्टा साधोस्त्रयस्त्रिंशदनुत्तरेषु श्रावकस्य तु द्वाविंशतिरच्युत इति गाथार्थः ।

पलिओवमप्पुहुत्तं तहेव पलिओवमं च इयरा उ ।
दुण्हं पि जहासंखं भणियं तेलुक्कदंसीहिं ॥ ३०२ ॥

द्वयमध्यवर्तिनः तथाविधलोभाणुवेदकाः षड्विधबन्धका विनिर्दिष्टास्तीर्थकृद्भिरिति ॥

मोहाऊवज्जाणं पयडीणं ते उ बंधगा भणिया ।
उवसंतखीणमोहा केवलिणो एगविहबंधा ॥ ३०७ ॥
[ मोहायुर्वर्जानां प्रकृतीनां ते तु बन्धका भणिताः ।
उपशान्तक्षीणमोहाः केवलिन एकविधबन्धाः ॥ ३०७ ॥

मोहायुर्वर्जानां प्रकृतीनां ज्ञानावरणादिरूपाणां ते तु सूक्ष्मसंपराया बन्धका भणिता,मोहनीयं न बध्नन्ति निदानाभावात्तस्य किंचिच्छेषमात्रत्वावस्थितायप्यसमर्थत्वात् आयुष्कं न बध्नन्ति तथाविधपरिणामोपात्तस्य वेदनास्थानाभावात् । उपशान्तक्षीणमोहाः श्रेणिद्वयोपरिवर्तिनः उपशान्तक्षीणच्छद्मस्थवीतरागाः केवलिनश्च सयोगिभवस्था एकविधबन्धका इति ।

ते पुण दुसमयठिइस्स बंधगा न उण संपरायस्स ।
सेलेसीपडिवन्ना अबंधगा हुंति नायव्वा ॥ ३०८ ॥
[ ते पुनर्द्विसमयस्थितेः बन्धका न पुनः सांपरायिकस्य ।
शैलेशीप्रतिपन्ना अबन्धका भवन्ति ज्ञातव्याः॥ ३०८॥]

ते पुनरुपशान्तमोहादयस्तस्यैकविधस्य द्विसमयस्थितेरीर्यापथस्य बन्धका न पुनः सांपरायिकस्य पुनर्भवहेतोरिति। शैलेशीप्रतिपन्ना अयोगिकेवलिनोऽबन्धका भवन्ति ज्ञातव्याः सर्वथा निदानाभावादिति द्वारं । तथा वेदना भेदिकेत्याह

संज्वलनानां चतुर्णामपि क्रोधादीनां कषायाणामुदयोऽनुदयो वा भवेत्साधोरुदयश्चतुस्त्रिद्व्येकभेदः, अनुदयोऽप्येवं छद्मस्थवीतरागादेर्भावनीयः । इतरस्य श्रावकस्य कषायाणां द्वादशानामष्टानां चोदय एवेति यदा द्वादशानां तदा अनंतानुबंधिवर्जा गृह्यन्ते एते चाविरतस्य विज्ञेया यदा त्वष्टानां तदानन्तानुबन्ध्यप्रत्याख्यानवर्जा एते च विरताविरतस्येति द्वारं । तथा बन्धश्च भेदक इत्येतदाह ।

मूलपयडीसु जइणो सत्तविहट्ठविहछव्विहिक्कविहं ।
बंधंति न बंधंति य इयरे उ सत्तविहबंधा ॥ ३०५ ॥

[मूलप्रकृतिषु यतयः सप्तविधाष्टविधषड्विधैकविधबन्धकाः
अबन्धकाश्च भवन्ति इतरे सप्तविधबन्धकाः तु ॥ ३०५ ॥]

मूलप्रकृतिषु ज्ञानावरणादिलक्षणासु विषयभूतासु तस्मिन्विषय इति के यतय इति साधवः सप्तविधाष्टविधषड्विधैकविधबंधका-बन्धकाश्च भवंति एतद्भावयिष्यति । इतरे श्रावकाः सप्तविधबन्धकाः तुशब्दादष्टविधबन्धकाश्चायुष्कबन्धकाल इति । एतदेव विवृण्वन्नाह ।

सत्तविहबंधगा हुंति पाणिणो आउवज्जियाणं तु ।
तह सुहुमसंपराया छव्विहबंधा विणिद्दिट्ठा ॥ ३०६ ॥

[ सप्तविधबन्धका भवन्ति प्राणिनो आयुर्वर्जितानामेव ।
तथा सूक्ष्मसंपरायाः षड्विधबन्धका विनिर्दिष्टाः ॥ ३०६ ॥]

सप्तविधबन्धका भवन्ति प्राणिनो जीवा आयुर्वर्जितानामेव ... ...धादि... ...नां सप्तानामिति तथा सूक्ष्मसंपरायाः श्रेणि

द्वयमध्यवर्तिनः तथाविधलोभाणुवेदकाः षड्विधबन्धका विनिर्दिष्टास्तीर्थकृद्भिरिति ॥

मोहाउवज्जाणं पयडीणं ते उ बंधगा भणिया ।
उवसंतखीणमोहा केवलिणो एगविहबंधा ॥ ३०७ ॥

[ मोहायुर्वर्जानां प्रकृतीनां ते तु बन्धका भणिताः ।
उपशान्तक्षीणमोहाः केवलिन एकविधबन्धाः ॥ ३०७ ॥

मोहायुर्वर्जानां प्रकृतीनां ज्ञानावरणादिरूपाणां ते तु सूक्ष्मसंपराया बन्धका भणिता,मोहनीयं न बध्नन्ति निदानाभावात्तस्य किंचिच्छेषमात्रत्वावस्थितावप्यसमर्थत्वात् आयुष्कं न बध्नन्ति तथाविधपरिणामोपात्तस्य वेदनास्थानाभावात् । उपशान्तक्षीणमोहाः श्रेणिद्वयोपरिवर्तिनः उपशान्तक्षीणच्छद्मस्थवीतरागाः केवलिनश्च सयोगिभवस्था एकविधबन्धका इति ।

ते पुण दुसमयठिइस्स बंधगा न उण संपरायस्स ।
सेलेसीपडिवन्ना अबंधगा हुंति नायव्वा ॥ ३०८ ॥

[ ते पुनर्द्विसमयस्थितेःबन्धका न पुनः सांपरायिकस्य ।
शैलेशीप्रतिपन्ना अबन्धका भवन्ति ज्ञातव्याः॥३०८॥]

ते पुनरुपशान्तमोहादयस्त्वेकविधस्य द्विसमयस्थितेरीर्यापथस्य बन्धका न पुनः सांपरायिकस्य पुनर्भवहेतोरिति । शैलेशीप्रतिपन्ना अयोगिकेवलिनोऽबन्धका भवन्ति ज्ञातव्याः सर्वथा निदानाभावादिति द्वारं । तथा वेदना भेदिकेत्याह

अट्ठण्हं सत्तण्हं चउण्ह वा वेयगो हवइ साहू ।
कम्मपयडीण इयरो नियमा अट्ठण्ह विन्नेओ॥३०९॥
[अष्टानां सप्तानां चतसृणां वा वेदको भवति साधुः ।
कर्मप्रकृतीनां इतरः नियमादष्टानां विज्ञेयः ॥ ३०९ ॥]

अष्टानां सप्तानां चतसृणां वा वेदको भवति साधुः कासां कर्मप्रकृतीनामिति तत्राष्टानां यः कश्चित् सप्तानामुपशान्तक्षीणमोहच्छद्मस्थवीतरागो मोहनीयरहितानां चतसृणामुत्पन्नकेवलो वेदनीयनामगोत्रायूरूपाणां इतरः श्रावको देशविरतिपरिणामवर्ती नियमादष्टानां विज्ञेयो वेदक इति द्वारं । प्रतिपत्तिकृतो भेद इति अत्र आह

पंच महव्वय साहू इयरो इक्काइणुव्वए अहवा ।
सइ सामइयं साहू पडिवज्जइ इत्तरं इयरो ॥३१०॥
[पञ्चमहाव्रतानि साधुः इतर एकादीनि अनुव्रतानि अथवा
सकृत् सामायिकं साधुः प्रतिपद्यते इत्वरं इतरः॥३१०॥]

पञ्च महाव्रतानि प्राणातिपातादिविरमणादीनि संपूर्णान्येव साधुः प्रतिपद्यत इति योगः । इतरः श्रावकः एकादीनि अणुव्रतानि प्रतिपद्यत इत्येकं द्वे त्रीणि चत्वारि पञ्च चेति ॥ अथवा सकृत्सामायिकं साधुः प्रतिपद्यते सर्वकालं च धारयति । इत्वरमितरः श्रावकोऽनेकशो न च सदा पालयतीति द्वारं । अतिक्रमो भेदक इति एतदाह

